मरुद्गणेन्द्रविषयेण निगमो व्याख्यातः। "अपि वा" एवमन्यथा "स्यात्"। मन्दु इत्यस्य तृतीयैकवचनान्तत्वेन विपरिणामः, एवञ्च सति मरुद्गणविशेषणमेतद्भवति। 'कथम्? "मन्दुना" मरुद्गणेन, इन्द्र! सन्दृश्यसे सङ्गच्छमानः। "समानवर्चसा इति" एतत् पदं मन्दुनेति "एतेन" पदेन "व्याख्यातम्" यथैव हि मन्दू इत्येतत् द्विवचनमेकवचनं वा, एवमेतदपि,—समानवर्चसाविन्द्रमरुद्गणाविति द्विवचनमथवा मन्दुना समानवर्चसा च मरुद्गणेन इत्येवं तृतीयैकवचनम्। अपि वा एवं मरुद्गण उच्यते,—त्वमिहेन्द्रेण सङ्गच्छमानो नित्यमेव सन्दृश्यस इति। समानमन्यत् ॥ ४ (१२) ॥

ईर्मान्तासः सिलिकमध्यमासः संशूरणासो दिव्यासो अत्याः। हंसा इव श्रेणिशो यतन्ते यदाक्षिषुर्दिव्यमज्मम् अश्वाः ॥ ईर्मान्ताः समीरितान्ताः (सुसमीरितान्ताः) पृथ्वन्ता वा सिलिकमध्यमाः संसृतमध्यमाः शीर्षमध्यमा वाऽपि वा शिर आदित्यो भवति यदनुशेते सर्वाणि भूतानि मध्ये चैषां तिष्ठतीदमपीतरच्छिर एतस्मादेव समाश्रितान्येतदिन्द्रियाणि भवन्ति संशूरणासः (दिव्यासो अत्याः) शूरः शवतेर्गतिकर्मणो दिव्या दिविजा अत्या अतनाः। हंसा इव श्रेणिशो यतन्ते। हंसा हन्तेर्घ्नन्त्यध्वानं

( श्रेणिश इति ) श्रेणिः श्रयनेः समाश्रिता भवन्ति य
क्षिपुर्यदापन् दिव्यमज्ममजनि माजिमश्वा अस्त्यादि
स्तुतिरश्वस्यादित्यादश्वो निस्तष्ट इति । सूरा
वसवो निरतष्टेत्यपि निगमो भवति ॥ ५ (१३) ॥

"ईर्मान्तासः (१४)"—इति । एतदनवगतम् । "समी
तान्ताः"—"पृथ्वन्ता वा" इति यथासम्भवं शब्दसमार्थ
"ईर्मान्तासः"—इति निगमः । दीर्घतमस आर्षम् । "यत्
दुत्तम्"—इति इयञ्च, द्वे अप्येते अश्वस्तोमीये सूक्ते, तेन चाश्
स्तूयतेऽश्वमेधे, आदित्यस्य रथे येऽश्वा युक्तास्त उच्यन्ते ईर्मा
न्तासः, तेषां सतानां येऽश्वाश्चत्वारः, ते "समीरितान्ताः
विक्षिप्तान्ताः, प्रसृतान्ताः, प्रविरला इत्यर्थः । "पृथ्वन्ता वा"
तेषामेवाश्वानां पृथवोऽन्ताः, पृथूरस्काः, पृथुजघना वा इत्यर्थः।
"सिलिकमध्यमाः, संसृतमध्यमाः" संश्लिष्टमध्यमा इत्यर्थः।
तेषां हि सतानां ये मध्यमास्त्रयः इतरेतरमुत्पीड्य संश्लेषेणा-
वस्थिताः । अथवा पृथुजघनोरस्कानां सतां मध्यमाः शरीरप्र-
देशाः, सतानामपि सश्लिष्टाः संलग्नास्तनवः, निरुदरास्तेऽश्वा
इत्यर्थः । तथापि हि स्तुतिरुपपद्यत एव । "शीर्षमध्यमा वा"
सिलिकमध्यमा वा । एवमपि हि शब्दे सारूप्यमस्ति, यो हि
तेषां सतानां मध्यमः, स शिरोभूतः प्रधान इत्यर्थः । "अपि वा"
एवमन्यथा स्यात् । "शिर आदित्यः" एव "भवति" सर्वभूत

१। "मूर्द्धा, राजेति वा अहमेतमुपासे इति ह विश्व-

शेते"। यस्माद्यासावनुप्रविश्य प्राणभावेन सर्वभूतानि "शेते" मास्ते, तस्मात् सर्वभूताश्रयणात् शिर आदित्यः। स चैतेषामश्वानां "मध्ये तिष्ठति" शीर्षमध्यमास्त एते शीर्षमध्यमा इत्युक्ताः सन्तः सिलिकमध्यमा इत्युच्यन्ते। "इदमपीतरच्छिर एतस्मादेव"—इति प्रासङ्गिकम्। "समाश्रितानि" हि "एतत्" उत्तमाङ्गम् "इन्द्रियाणि" चक्षुरादीनि "भवन्ति" इति शिर उपपत्तिः। 'संशूरणासः' सङ्गताः शूरेण भगवतादित्येन संशूरणाः। "शूरः शवतेर्गतिकर्मणः" स हि परानभिमुखो गच्छत्येव, न पर्य्यावर्त्तते। 'दिव्यासः' ते हि "दिव्याः" दिविजाताः, 'अत्याः' "अतनाः" ते हि अतन्त्येव, मुहूर्त्तमपि नावतिष्ठन्ते। य एवंलक्षणा अश्वास्ते किं कुर्वन्ति? इति। उच्यते,—'हंसा इव श्रेणिशो यतन्ते' हंसा इव श्रेणीकृताः पङ्क्तीकृताः यतन्ते गच्छन्ति। "हंसा हन्ते." ते हि "घ्नन्त्यध्वानम्"। कदा पुनरेवं यतन्ते? "यदाक्षिषुः" 'यत्' "यदा" यस्मिन् काले 'आक्षिषुः' 'आपन्' आप्नुवन्ति। किम्? 'दिव्यम्' 'अज्मम्' "अजनि"। अस्यतेऽस्यां गम्यत इति अजनिः, धाविका, स्वर्गपथ इत्यर्थः। यदा ते आप्नुवन्ति—उदयादारभ्य यावदस्तमिति, तदैवं यतन्ते। के पुनस्ते? इत्युच्यते—'अश्वाः'। एवमेतानि ईर्मान्तास इत्येवमादीनि अश्वविशेषणानि, अश्वशब्देन समानविभक्त्यन्तत्वात्। आश्वमेधिको रथो भवत्यात्मा इत्येवं प्रक्रमेण सूर्यदैवत एव मन्त्र उक्तः। स पुनरयमश्वस्तुतौ विनियुक्तस्तदसमञ्जसमिति मन्यमानो भाष्यकारः प्रतिसमाधित्सुराह,—"अस्त्यादित्यस्तु-

तिरश्वस्य" इति, अश्वोऽपि ह्यादित्यात्मना स्तूयत इत्
आह,—कयोपपत्त्या ? इति। उच्यते, "आदित्यादश्वो नि
इति"—अनयोपपत्त्या सूर्य्यात्मना अश्वः स्तूयते। आह,—
एतत्सूरादश्वो निस्तष्ट ? इति। उच्यते,—"सूरादश्वं व
निरतष्ट—इत्यपि निगमो भवति"। "यमेन दत्तं त्रित एनम
न्द्र एणं प्रथमो अध्यतिष्ठत्। गन्धर्वो अस्य रशनामगृ
णात् सूरादश्वं वसवो निरतष्ट॥"—इति (ऋ० सं० २, ३,
२)। 'यमेन' 'एनम्' अस्माकं 'दत्तम्' अश्वम् 'त्रितः' त्रिस्था
वायुः 'आयुनक्' युनक्ति। यत्रायं योक्तव्यः, तत्र वायुना यु
स्येन्द्रेणाधिष्ठितस्य 'अस्य' 'गन्धर्वः' गन्धर्वराजः 'रशनामगृ
णात्' नियमेन रज्जुं गृह्णाति। कुतः पुनरयमश्वः ? इत्युच्य
—'सूरात्' सूर्य्यादेतमेवंलक्षणम् 'अश्वं' 'वसवः' 'निरतष्ट' निर्म
एयन्तः। एवमेतस्मिन् मन्त्रे सूर्य्यप्रभवोऽश्व इति स्तूयते
"कारणाच्च कार्य्यमनन्यत्"—इत्युपपद्यते सौर्य्येण मन्त्रेणाश्वस्
स्तुतिरिति॥ ५ (१३)॥

कायमानो वना त्वं यन्मातॄरजगन्नपः। न तत्
अग्ने प्रमृषे निवर्तनं यद्दूरे सन्निहाभवः॥ कायमान-
चायमानः कामयमान इति वा वनानि त्वं यन्मातॄरपोऽगम
उपशाम्यन् न तत्ते अग्ने प्रमृष्यते निवर्तनं दूरे यत् सन्निह
भवसि जायमानः। लोधं नयन्ति पशु मन्यमानाः।

लुब्धमृषिं नयन्ति पशुं मन्यमानाः। क्षीरं पावकशो चिषम्। पावकदीप्तिम्। अनुशायिनमिति शाशिनमिति वा॥ ६ (१४)॥

"कायमानः (१५)"—इति। एतदनवगतम्। "चायमानः" —इत्यवगमः, "कामयमान इति वा"। "कायमानो वना त्वम्" —इति निगमः (ऋ० सं० ३, १, ५, २)। विश्वामित्रस्ये-यमार्षम्। बृहती। प्रातरनुवाकाश्विनयोः शस्यते। हे भगवन्! अग्ने! 'कायमानः' "चायमानः" पश्यन्नित्यर्थः। अथवा "कामयमानः"। किम्? त्वां योनिम्। कतमाम्? 'वना' "वनानि" दारूणि। दारुभ्योऽग्निर्जायते, तदेतत् प्रसिद्धमेवोक्तम्, यदा चाग्निरनुगच्छति अरणी वावगच्छति। 'मातृः' वा सर्वभूतनिर्मात्रीः 'अपः' सापि योनिरेवाग्नेः। "आपो वा अग्नेर्योनिः,— इति ह विज्ञायते"। अनयोरन्योरन्यतरां योनिं 'यत्' यदा 'अजगन्' "अगमः" "त्वम्"। कदा पुनरगमः? "उपशाम्यन्"—इत्यध्याहृत भाष्यकारेण, अनुगच्छन्नित्यर्थः। तस्य तत्रैवमनुगच्छतः किम्? इति। उच्यते,—'न' 'तत्' 'ते' 'अग्ने'! 'प्रमृषे' 'निवर्त्तनम्'। "न प्रमृष्यते" न प्रमृज्यते निवर्त्तनं', वर्त्म, मार्गो न लुप्यत इत्यर्थः। कथं गम्यते न प्रमृज्यते मार्गः? "इति। 'दूरे' अपि 'सन्' अदृश्योऽपि भूत्वा यस्मात् "इह" पुनः "भवसि" एव। कदा? "जायमानः" "यत्" यदा अद्भ्यो जायसे वैद्युतात्मना, यदा वा अरणिभ्यां जायसे मथ्यमानः, तदा॥

"न सायकस्य चिकिते जनासो लोधं नयन्ति पशु मन्यमानाः। नावाजिनं वाजिना हासयन्ति न गर्दभं पुरो अश्वान् नयन्ति" इति (ऋ० सं० ३, ३, २३, ३)। "लोधम् (१६)"—इति। एतदनवगतम्। "लुब्धम्"—इत्यवगमः। यस्मिन् निगमे एष शब्दः सा वसिष्ठद्वेषिणी ऋक्। अहं च कापिष्ठलो वासिष्ठः, अतस्तान् निर्ब्रवीमीति ॥

"शीरम् (१७)"—इति। एतदनवगतम्। अग्निरभिधेय "अनुशायिनमिति वा"—इति, अनुप्रविश्य सर्वभूतानि शेते इत्यनुशायी, तमनुशायिनम्। अश्नोति व्याप्नोति वा सर्वभूतानीति "आशिनम्"। "शीरं पावकशोचिषं ज्येष्ठो यो दमेष्वा दीदाय दीर्घश्रुत्तमः ॥"—इति निगमः (ऋ० सं० ६, ७, ११, १) भार्गवस्य प्रयोगस्येयमार्षम्। प्रातरनुवाकाश्विनयोः शस्यते 'शीरम्' अनुशायिनं व्यापिनं वा अग्निं स्तौमि। "पावकशोचिषम्" पावयित्री यस्य शोचिर्दीप्तिः, तं पावकशोचिषम्। किञ्च 'ज्येष्ठः' श्रेष्ठः, 'यः' प्रधानः 'दमेषु' यज्ञगृहेषु 'आदीदाय आदीप्यते, परिचर्य्यमाणोऽग्निहोत्रिभिः। किञ्च 'दीर्घश्रुत्तमः' यः, दीर्घश्रोतृतमः यो दीर्घश्रुत्तमः। तमग्निं स्तौमि ॥ ६ (१४) ॥

कनीनकेव विद्रधे नवे द्रुपदे अर्भके। बभ्रू यामेषु शोभेते ॥ कनीनके कन्यके कन्या कमनीया भवति क्वेयं नेतव्येति वा। (कमनेनानीयत

इति वा ) कनतेर्वा स्यात्कान्तिकर्मणः कन्ययोरधिष्ठानप्रवचनानि सप्तम्या एकवचनानीति शाकपूणिर्विद्भयोदारुपाद्योर्दारु दृणातेर्वा द्रूणातेर्वा तस्मादेव द्रु नवे नवजाते अर्भके अवृद्धे ते यथा तदधिष्ठानेषु शोभेते एवं वभ्रू यामेषु शोभेते वभ्र वोरश्वयोः संस्तव इदश्व मेऽदादिदश्वऽ मेदादित्यृपिः प्रसंख्यायाह । सुवास्त्वा अधि तुग्वनि । सुवास्तुर्नदी तुग्व तीर्थं भवति तूर्णमेतदायन्ति । कुविन्नंसन्ते मरुतः पुनर्नः । पुनर्नो नमन्ते मरुतो नसत इत्युपरिष्टाद् व्याख्यास्यामः । ये ते मदा आहनसो विहायसस्तेभिरिन्द्रं चोदय दातवे मघम् । ये ते मदा आहननवन्तो वञ्चनवन्तस्तैरिन्द्रं चोदय दनाय मघम् ॥ ७ (१५) ॥

"विद्रधे (१८), द्रुपदे (१६)"—इत्येते पदे एकनिगमे । द्वे अप्यनवगते, पक्षेण चानेकार्थे । 'विद्रधे' विद्धे, 'द्रुपदे' द्रुममये पदे इत्यवगमः । दारुपादौ वा एताभ्यां शब्दाभ्यां विशेष्येते । कन्ययोर्वा पादपीठप्रवचने सप्तम्येकवचनान्ते एते । द्वयोरपि पदयोरेक एव निगमः,—"कनीनकेव विद्रधे०—०शोभेते"—इति (ऋ० सं० २, ६, ३०, ७)। वामदेवस्यार्षम् । "कन्या कमनीया भवति" सर्व एव हि तां प्रार्थयन्त एव । अथवा "क्वेयं नेतव्येति वा" दानायेत्येवं तां प्रति पिता चिन्तयतीति कन्या । "कमने-

नानीयत इति वा"। "कनतेर्वा स्यात् कान्तिकर्मणः" "कनति (१७)' कानिषत् (१८)"—इति कान्तिकर्मसु पठितम्। 'इव' इति उपमायाम्। 'विद्रधे' 'नद्ये' 'द्रुपदे' 'अर्भके'—इत्येतानि चत्वारि पदानि "कन्ययोरधिष्ठानप्रवचनानि" "सप्तम्या एकवचनानीति" एवं "शाकपूणिः" आचार्य्यो मन्यते। एकस्मिन् दारुमये प पीठेऽस्मिन् समधिरूढेषु पाकाख्येषु अधिष्ठानेषु अधि 'शोभेते' यथैवं 'बभ्रू' बभ्रूवर्णे अश्वे 'यामेषु' आजिस्था यमनस्थानेषु, कन्यके, शालभञ्जिके वा। तदेतैश्चतुर्भिः पादैरुक्त इति शाकपूणिराचार्य्यो मन्यते। यास्कस्तु "विद्रयोः" विद्रु ताधोभागयोः "दारुपाद्योः" अधिरूढयोः कन्ययोरभिधानपदान् मिधायकान्येतानि द्विवचनानीति मन्यते। ताभ्यां ह्यश्विन्यो रुपाकारत्वेन सारूप्यमस्तीत्येवमुपादानम्। दारुपाद्योरिति तस्मिन् व्याख्यानप्रसक्ते पदे विग्रहप्रसक्तो दारुशब्दो निरुच्यते,— "दारु दृणातेर्वा" विदारणार्थस्य (क्र्या० प०)। "दृणातेर्वा" हिंसार्थस्य तस्मादेव धातुद्वयादन्यतरस्य "द्रु"—इत्येतदभिधानं भवति। द्रुपदे इत्येतदपेक्ष्य "तस्मादेव द्रु"—इत्येतदुक्तम्, द्रुम इत्यर्थः। "नद्ये नपनाते"। "अर्भके अवृद्धे" अल्पके इत्यर्थः। "ते" कन्यके एवम्प्रकारेषु "तदधिष्ठानेषु" तेषु पादुकाख्येषु अधिष्ठानेषु अधिरूढे "शोभेते" यथा "एवं" "बभ्रू" बभ्रूवर्णे अश्वे "यामेषु" आजिस्थानेषु यमनस्थानेषु वा बन्धनस्थानेषु मन्दुराख्येषु, वर्त्तमाने शोभेते। ते एवमेव "बभ्रूयोरश्वयो संस्तवः"॥

"तुग्वनि (२०)"—इति एतदनवगतम्। "तूर्णमेतदायन्ति"—इति शब्दसमाधिः। "तीर्थम्" अभिधेयम्। "सुवास्त्वा अधि तुग्वनि"—इति निगमः (ऋ० सं० ६, १, ३५, ७)। अस्य ऋक्पादस्य ऋकछेपापेक्षो निर्णयः। सर्वस्या अपि च तस्या ऋचो यस्यामयं पादः, तस्या या आद्यान्या आधस्त्या ऋक्, तदपेक्षो निर्णयो यतः, अतस्तस्या ऋचः आधस्त्यायाः सङ्क्षिप्यार्थमाह भाष्यकारः,—'इदञ्च मेऽदादिदञ्च मेऽदादित्यृषिः प्रसङ्ख्यायाह"—इति। इदञ्च द्रव्यजातं, मम दत्तवानसौ राजेत्येवं, प्रसङ्ख्याय' परिसङ्ख्यानं कृत्वा, ऋषिराह उक्तवानित्यर्थः। कतमा पुनरसौ आधस्त्या ऋक्, यथायमर्थः सङ्क्षिप्यते? इति। उच्यते,—"अदान्मे पौरुकुत्स्यः पञ्चाशतं त्रसदस्युर्वधूनाम्। मंहिष्ठो अर्य्यः सत्पतिः." (ऋ० सं० ६, १, ३५; ६)। सोभरेः काण्वस्येयमार्षम्, परा च, दानप्रशंसा। 'यः' 'अदात्' 'मे' मम, 'पौरुकुत्स्यः' बहुशत्रुकर्त्तितुः पुत्रः 'त्रसदस्यु' दस्युत्रासनः। किमदात्? 'पञ्चाशतं वधूनाम्' पञ्चाशतं वोढव्यानां कन्यानाम्। 'मंहिष्ठः' पूज्यतरः। 'अर्य्यः' ईश्वरः। 'सत्पतिः' च सतां पालयिता च। एवंलक्षणः पौरुकुत्स्यः त्रसदस्युः मम दत्तवान् पञ्चाशतं वधूनाम्। आह किमेतदेवादात्? नेति। उच्यते,—इदञ्च यदुक्तम् उत्तरञ्च यद् वक्ष्यते। कतरा पुनरसावुत्तरा ऋक्? इति। उच्यते,—"उ त मे प्रयियोर्वयियोः सुवास्त्वा अधि तुग्वनि। तिसृणां सप्ततीनां श्यावः प्रणेता भुवद् वसुर्दियानां पतिः"—(ऋ० सं० ६, १, ३५, ७)। अप्येतत्,—यदुक्तम्,

अपि च यदेवम् वक्ष्यमाणमिति 'उत'—शब्द एतमुभयं समा
यति। 'मे' मम 'प्रयियोः' (प्रगम्यते येन, तत् प्रयियुः, धन
इत्यादि, तस्य प्रयियोः) धनस्य, यद्दानात्। तामिः कन्यानि
'वयियोः' (ऊयत इति वयियुः वस्त्रादि, तस्य) च वह
'तिसृणां सप्ततीनां' गवाम्। 'श्यावः' श्यामवर्णः कृष्णः, श्
वर्णानां 'प्रणेता' प्रकर्षेण नेता अग्रतोगामी। 'भुवद्वसुः' भ
यिता वसूनाम्। 'प्रशस्तः' पूजितलक्षणः। 'दियानां' दान
णाम्, देया याः तासां पतिः। ताश्च गा एतत्सङ्ख्यायु
एतद्गुणयुक्ताश्च मह्यमदात्। क्व पुनरसावदात्? 'सुवास्त
सुष्ठु निवासाया नद्याः 'अधि तुग्वनि' तीर्थेऽधि, एतत् अ
मह्यम्। "सुवास्तुः नदी" "तुग्वं तीर्थं भवति" "तूर्णं"
"एतत्" अवगाहनार्थम् "आयन्ति"। अत्र दानसम्बन्धा
सुवास्तुशब्दो नद्यभिधाने, प्रसिद्धं हि नद्यां दानम्, नदीसम्ब
न्धाच्च तुग्वशब्दोऽपि तीर्थाभिधायक इत्युपपत्तिः। निगमार्थ
प्रकाशनायैवं सूक्तगतोऽपि अन्वीक्षितव्य एवार्थ इत्येतत् प्रदर्शित
माचार्येण॥

"नंसन्ते (२२)"—इति। एतदनवगतम्। "नमन्ते"—
इत्यवगमः। "कुविन्नंसन्ते"—इति निगमः, "ताँ आ रुद्रस्य
मीळ्हुषो विवासे कुविन्नंसन्ते मरुतः पुनर्नः। यत् सस्वर्ता
जिहीळिरे यदाविरव तदेनं ईमहे तुराणाम्"॥ इति (ऋ० सं०
५,४,२८,५)। वसिष्ठस्येयमार्षम्। 'तान्' अहं 'मीळ्हुषः'
मरुतः वर्षस्य सेक्तॄन् धनवतः, बलवतः वा 'आविवासे' आभि

सुख्येन स्थित्वा परिचरामि। किंलक्षणान् पुनः मरुतः आविघासे ? 'रुद्रस्य' इन्द्रस्य स्वभूतान्, आत्तान् वा। अथवा 'मीव्हुषः' इति रुद्रविषयं षष्ठ्येकवचनान्तं स्यात् मीव्हुषो रुद्रस्य स्वभूतानिति। कस्मात् पुनस्तानहं परिचरामि ? यस्मात् ते मरुतः 'कुवित्' बहु 'नंसन्ते' 'नमन्ते' 'पुनः' वर्षायु प्रकारेण अस्मान् प्रति नमन्ते, प्रह्वीभवन्ति। किञ्च, 'यत्ससवर्त्ता' यच्छरीरगतम् 'एनः' जिहीलिरे' लज्जयन्ति, यच्च 'आविः' प्रकाशम्, तदेवम्प्रकारमुभयलक्षणमपि। एनोऽस्मान् 'जिहीलिरे' लज्जयन्ति। तदेषां मरुतां 'तुराणां' त्वरमाणानां प्रसादेन उभयलक्षणमपि 'अवयजेमहि' निर्णुदेमहि,—इत्येतत् 'ईमहे' 'याचामहे' अनेन परिचारेण आराध्यैतान् मरुत इति। "नसत इत्येतदुपरिष्टात्" द्वादशाध्याये "व्याख्यास्यामः"—"अभि प्रयन्त समनेव योषाः" (ऋ० सं० ३, ८, ११, ३)—इति व्याख्याने, "नसतिराप्नोतिकर्मा वा नमतिकर्मा वा"—इति॥

"आहनसः (२३)"—इति। एतदनवगतम्। "आहननवन्तः"—इत्यवगमः। "ये ते मदा आहनसः"—इति निगमः, "परि सोम प्र धन्वा स्वस्तये नृभिः पुनानो अभि वासयाशिरम्। ये ते ०—० मयम्॥"—इति (ऋ० सं० ७, २, ३३, ५)। पावमानी सौमी। कवेर्भार्गवस्येयमार्षम्। जगती। हे भगवन्! 'सोम!' 'परिप्रधन्व' परिप्रक्षर, एतस्मात् दशापवित्रात्। 'स्वस्तये' स्वस्त्ययनाय अस्माकम्। 'नृभिः' एतैः ऋत्विग्भिः, 'पुनानः' पूयमानः। किञ्च, 'अभिवासय' अभिप्रच्छादय,

अभिमावय। 'आशिरम्' तृतीयसवने। किञ्च, 'ये ते मद
आहनसः' ये ते मदाः तव आहननवन्तः, "वञ्चनवन्तः" सम्भ
हयितारः, 'विहायसः' महान्तः, तैः 'इन्द्रं' 'चोदय' प्रेरय, 'दातवे'
"दानाय" 'मघं' धनम्। यथास्माकं तैर्मदैरनभिहतचेताः स
दद्यात् मघं धनमित्यर्थः ॥ ७ (१५) ॥

उपो अदर्शि शुन्ध्युवो न वक्षो नोधा इवाविरकृत
प्रियाणि। अद्मसन्न ससतो बोधयन्ती शश्वत्तमागात्पुन
युवतीनाम् ॥ उपादर्शि शुन्ध्युवः शुन्ध्युरादित्यो भवति शो
नात्तस्यैव वक्षो भासाध्यूढं इदमपीतरद्वक्ष एतस्मादेवाध्य
काये शकुनिरपि शुन्ध्युरुच्यते शोधनादेवोदकचरो भ
न्यापोऽपि शुन्ध्युव उच्यन्ते शोधनादेव नोधा ऋषिर्भवति
नवनं दधाति स यथा स्तुत्या कामानाविष्कुरुत एवमुषा रूपा
ण्याविष्कुरुते ऽद्मसदद्मान्नं भवत्यद्मसादिनीति वाद्मसानिनीति
वा। ससतो बोधयन्ती शश्वत्तमागात् पुनरे युवतीनाम्।
(स्वपतो बोधयन्ती) शाश्वतिकतमागात् पुनरे युवतीनाम्।
ते वार्शीमन्त इष्मिणः। ईशणिन इति वैशणिन इति
वार्शनिन इति वा वाशीति वाङ्नाम वाश्यत इति सत्याः।
अमोरात्तरण्यौ प्रति मे गृणीहीन्द्राय वाहः कृणवाव जुष्टम्।

अभिवहनस्तुतिमभिपत्रणप्रवादो स्तुतिं मन्यन्त ऐन्द्री त्वेव शस्यते परितक्म्येत्युपरिष्टाद् व्याख्यास्यामः ॥८(१६)॥

इति चतुर्थाध्यायस्य द्वितीयः पादः ॥ ४, २ ॥

"अन्नसत् (२४)"—इति। एतदनवगतम्। "अन्नसादिनीति १ अन्नसानिनीति वा" शब्दसमाधी। "उपो अदर्शि—इति ागमः (ऋ० सं० २, १, ३, ४)। कक्षीवत आर्षम्। औपसी। ष्टुप्। प्रातरनुवाकाश्विनयोः शस्यते, 'उपो अदर्शि' उपश्लिष्टा ायत इयमुषाः। कस्य? 'शुन्ध्युवः' शोधयितुरादित्यस्य, ादित्यो हि यदप्यशुचिर्भवति, तदपि रश्मिभिः स्पृष्ट्वा शुची- करोति। "सूर्यः पवित्रमुच्यते"—इति वक्ष्यति। तमांसि वा शोधयतीति शुन्ध्युः, तस्य शुन्ध्युवः। कथं पुनरुपश्लिष्टा दृश्यते? 'वक्षो न' वक्ष इव, यथा तस्य स्वभासः स्वप्रकाशजालं वक्षीभूतमेतस्मिन् मण्डलेऽध्यूढम्, एवमियमुषा एतस्मिन् मण्डले उपश्लिष्टा दृश्यते, सन्निकर्षात्। प्रासङ्गिकमुच्यते शब्दसामा- न्यात्,—"इदमपीतरत्" "वक्षः" पुरुषवक्षः, पशुवक्षो वा अङ्गम् "एतस्मादेव" वहेर्धातोः (भू० प०), इदम् "अध्यूढम्" अधिप्रवे- शितमेव "काये" शरीरे भवति। "शकुनिरपि" य एष मद्गुर्नाम, अयमपि "शुन्ध्युरुच्यते" "शोधनादेव" यो हि "उदकचरो भवति" नित्यशुद्ध एवेति शुन्ध्युः। "आपोऽपि शुन्ध्युव उच्यन्ते" ता अपि हि शोधयन्ति। "एवं" तावदियम् "उषाः" आदित्य- स्यवक्ष इवोपश्लिष्टा दृश्यते। किञ्च इयमेवोषा नोधाः इवाविष्कृ-

तत्प्रियाणि "नोधा ऋषिर्मतिं" स हि "नवर्न" स्तोत्रं
प्रति "दधाति"। "स यथा" स्वमुखोद्गीर्णया "स्तुत्या"
एवात्मनः "कामान्" स्वानि कामाख्यानि
आविष्कृणोति, प्रकाशति देवताः प्रति। "एवम्" इयम्
स्वात्मनः एवोद्गीर्णेन प्रकाशेन "रूपाणि" जनानाम्
"कृणुते" प्रकाशीकुरुते। किञ्च, इयमेवोषाः 'अद्मसद्म
बोधयन्ती' "अद्म अन्नम्" तत् प्रतिकर्त्तव्यतया सीदति
सनोति, सम्भजत इति "अद्मसत्" गृहाधिकारे
धिका स्त्री। सा यथा प्रातरेव क्षीराद्युपादानार्थं
"स्वपतः" जनान्, दोहकादीन् "बोधयन्ती" अन्नं साधयि
एवमुषा अपि जनान् बोधयन्ती, तत्काले हि ते इतिकर्त
जनाः प्रतिबुध्यन्ते, तेनैतयैव बोधिता भवन्ति। आह,—
पुनरेतद्भवति ? इति। उच्यते,—यदा 'शश्वत्तमागात्' "शश
कतमा" नित्यतमा "आगात्" आगच्छति, तदैव जनान्
यति, एवमुषा रूपाण्याविष्कुरुते। एवञ्च पक्ष इवोषा
त्यस्य दृश्यते। आह,—का वा सा शश्वत्तमा इयमु
इति। उच्यते,—'पुनरेयुषीणाम्' "पुनरागामिनीनाम्"
इत्यर्थः। या एताः काश्चिद्गत्वा पुनरागच्छन्ति, ताः पुनरेयु
गावः, अन्या वा, तासां पुनरेयुषीणामिति निर्धारयति। ए
'शश्वत्तमा' शाश्वतिकतमा। एवमेतस्मिन् मन्त्रे, सा य
अद्मसदित्यन्नसाधिका स्त्री उच्यते, सा हि तत्काले अन
दोहकादीन् बोधयति, उषा अपि च तत्काल एवागच्छती

पयमुपमानमुपपद्यत इत्युपपत्तिः। अन्ये तु मक्षिकामशकं मन्यन्ते, सापि हान्ते सीदति, रनोति पात्रं तत्काले च प्रतिबुध्यमाना अन्यान् बोधयतीति ॥

"इष्मिणः (२५)"—इति। एतदनवगतम्। ईषणिन इति वा, एषणिन इति वा, आर्षणिन इति वा" शब्दसमाधयः। "श्रियसे कं भानुभिः सं मिमिक्षिरे ते रश्मिभिस्त ऋक्वभिः सुखादयः। ते वाशीमन्त इष्मिणो अभीरवो विद्रे प्रियस्य मारुतस्य धाम्नः" ॥ इति निगमः ( ऋ० सं० १, ६, १३, ६ )। राहूगणस्य गोतमस्येयमार्षम्। जगती। मारुतस्य प्रैषसूक्तस्य चरोरियं याज्या, तत्र हि उक्तम् "प्रियवती याज्यानुवाक्ये भवतः" —इति। 'श्रियसे कम्' श्रियोऽर्थाय यजमानाय आत्मने वा, कमित्यनर्थकमेव, कामये इति वा अस्यार्थः। 'भानुभिः' दीप्तिभिः सूर्यरश्मिभिः, येऽन्तरिक्षे मरुतः 'सम्मिमिक्षिरे' सङ्गच्छन्ते, 'ते' एव 'रश्मिभिः' सर्वलोकनियन्तृभिः 'सम्मिमिक्षिरे'—इत्येतदेवानुवर्त्तते। 'ते' एव 'ऋक्वभिः' रसदर्तृभिः सम्मिमिक्षिरे। 'सुखादयः' सुखदातारः जनानाम्। शोभनानां वा हविषां खादितारः, अत्तारः, 'सुखादयः'। 'ते' एव 'वाशीमन्तः' वाग्मिनः ? 'इष्मिणः' "ईषणिनः" उपगमनवन्तः, "एषणिनो वा" इच्छावन्तः, "आर्षणिनो वा" आभिमुख्येन सर्वार्थानां द्रष्टारः, 'अभीरवो विद्रे' विदारयितव्ये शत्रौ प्राप्ते विगतभयः, अथवा 'विद्रे' वेद्मि, जाने। य एवंलक्षणा मरुतः, तेषां मरुतां यत् स्थानम् अन्तरिक्षलोकः, तस्य 'प्रियस्य' इष्टस्य 'मारुतस्य'

मरुतां स्वभूतस्य 'धाम्नः' स्थानस्य प्राप्तये, तानेव मरुतः स्तौ... त्यध्याहारः। एवमेतस्मिन् मन्त्रे 'वाशीमन्त इष्मिणः'—इति... तस्मादेकवाक्यसम्बन्धात् 'इष्मिणः'—इत्येतन्मरुद्विशेषण... "वाशीति वाङ्नाम"। "वाशी (११), वाणी (१२)"—इति पठितं वाङ्नामसु। वास्यत इति कारकावधारणम्॥

"वाहः (२६)—इति। एतदनवगतम्। पक्षेण वाते... र्थम्। "शंसावाध्वर्यो प्रति मे गृणीहीन्द्राय वाहः कृण... जुष्टम्। एदं बर्हिर्यजमानस्य सीदाथा च भूदुक्थमिन्द्र... शस्तम्॥"—इति निगमः (ऋ० सं० ३, ३, १६, ३)। विश्वा... मित्रस्येयमार्षम्। त्रिष्टुप्। होता ब्रवीति,—हे 'अध्वर्यो' एहि 'प्रति गृणीहि' 'शंसाव' आवामुभावपि, न ह्यप्रतिगीर्य्यमा... शस्यते, नाप्यशस्यमानं प्रतिगीर्य्यते, एवमितरेतरोपकारकत्वमि... प्रेत्योक्तं द्विवचनम्,—'शंसाव' इति। एवमितरेतरगुणसम्पन्नेऽ... 'वाहः' स्तोत्रं 'कृणवाव' आवाम्। स्तोम एव हि देवानां व... भवति। "वाहिष्ठो वां हवानां स्तोमः। (ऋ० सं० ६, ... २१, १)"—इति, "वोढृतमो ह्वानानां स्तोमः"—इति ... वक्ष्यति। एवमियमभिवहनस्तुतिः। एवमेतच्छस्त्रमाभिमुख्य... गामि "इदम्" 'इन्द्राय' इन्द्रार्थम्, 'जुष्टम्' प्रियम्, तस्य य... स्यात् तथा कुर्वः। अन्ये त्वेनाम् "अधिषवणप्रवादां" सो... मिश्रवणप्रवादिनीं स्तुतिं मन्यन्ते, वाहःशब्दो हि उदकवाहाभिधा... नसारूप्यात् तत्र युक्तरूपतर इति कृत्वा यदा पुनरेवं, तदेयमर्थ... ...—'इन्द्राय' 'इदं' 'वाहः' सोमोदकपूर्णमधिषवणफलक...

र्थं चाहः 'जुषु' प्रियं यथा स्यात् तथा कुर्वः। तद्धि 'सुशस्तं' सुप्रतिगीर्णञ्च इन्द्रस्य प्रीतिजनकं भवति। एतदेव कर्त्तव्यमाभ्यां यतः, अतो ब्रवीमि,—'एदं बर्हिः यजमानस्य सीद' एतद् बर्हिः, यदेतदग्रतःस्तीर्णमग्रेण होतारं बर्हिः। 'सीद' "स प्रतिगत्योपविशति"—इति ह्युक्तम्, 'यजमानस्य' अभिप्रेतकामावाप्तये आसीद। मा अयमंस्थाध्रिरेणैतच्छ्यत इति, उपविश्यैव त्वं प्रमाप्रतः। 'अथ' अनन्तरमेव 'भूत्' भवति। 'उक्थं' शस्त्रमेतत्, इन्द्रार्थं शस्तम्, नात्र मम वाङ्मूषैत्यभिप्रायः। एवमियमभिधहनस्तुतिः, अथवा अभिपवणप्रयाक्षा स्तुतिः, उभयथापि तु इयम् "ऐन्द्री त्वेव शस्यते" इदमेवैकमभिधानमत्र व्युत्पाद्यत इत्यभिप्रायः॥

"परितक्म्या (२७)"—"इति"। "एतदुपरिष्टाद् व्याख्यास्यामः" षोड़शाध्याये, तत्र हि एतत् "किमिच्छन्ती सरमा प्रेद मानट् ( ऋ० सं० ८, ६, ५, १ )"—इत्येतस्मिन् मन्त्रे प्रसक्तमायास्यतीति लाघवार्थमुत्कृष्टमिति॥ ८ (१६)॥

इति निरुक्तवृत्तौ नवमाध्यायस्य ( चतुर्थाध्यायस्य )
द्वितीयः पादः॥४, २॥

---

सुविते सुइते सूते सुगते प्रजायामिति वा। सुविते मा धा इत्यपि निगमो भवति । दयतिरनेककर्मा । नवेन पू दयमानाः स्यामेत्युपदयाकर्मा । य एक इद्विदयते वस्वि दानकर्मा वा विभागकर्मा वा । दुर्वर्त्तुर्भीमो दयते वनानीति दहतिकर्मा । दुर्वर्त्तुर्दुर्वारः विदद्वसुर्दयमानो वि शत्रूनिति हिंसाकर्मा । इमे सुता इन्दवः प्रातरित्वना सजोषसा पिब तमश्विना तान् । अयं हि वा मूतये वन्दनाय मां वायसो दोषा दयमानो अबूबुधत् । दयमान इति । नू चिदिति निपातः पुराणनवयोर्नू चेति च । अद्या चिन्नू चित्तदपो नदीनाम् । अद्य च पुरा च तदेव कर्म नदीनाम् । नू च पुरा च सदनं रयीणाम् । अद्य च पुरा च सदनं रयीणां रयिरिति धननाम रातेर्दानकर्मणः ॥ १ (१७)॥

"सुविते (२८)"—इति । एतदनवगतम् । अनेकार्थञ्च । 'सुइते'—इति, "सूते"—इति शब्दसमाधी । अत्र यदा "सु इते" इति विपरिणामः, तदा "सुगते" इत्यर्थः । यदा "सूते" इति, तदा सूते देवदत्ता पुत्रमिति प्रजायत इत्यर्थः । एवं 'सुविते'

इत्यस्य "सु इते, सूते" शब्दसमाधी। तयोरेतद् यथासङ्ख्ये-र्थवचनम्, "सुगते, प्रजायामिति"। "सुचिते मा धाः"—यपि निगमः। "अनाधृष्टमस्य नाधृष्यं देवानामोजो अभि स्तिपाः। अनभिशस्त्यञ्जसा सत्यमुपगेयं सुचिते मा धाः"—ते। अनेन तानूनप्त्रं संस्पृश्यते। हे तानूनप्त्र! 'अनाधृष्टमसि' नाधर्षितमसि, त्वयि स्पृष्टे समयोपयन्त्रिता ह्येते नान्योऽन्य-स्मिन् द्रोहमुपयास्यन्त्यृत्विजः। कुतः पुनरेतत् सामर्थ्यं तव? ते। इतः,—यस्मात् 'अनाधृष्यं देवानामोजः' अनाधर्षणीयं म्। ओजो बलमित्यर्थः। किञ्च, 'अभिशस्तिपाः' अभिशंस-न् पासि त्वम्। 'अनभिशस्ति' नाभिशंसनीयं केनचित्, नवद्यमित्यर्थः। 'अनु मे' 'इदं व्रतं व्रतपतिः' 'मन्यताम्' अनु-न्यताम् 'इदं व्रतं' कर्म, 'व्रतपतिः' अग्निः। 'मे' मयोपेयमानाम् तां 'दीक्षाम्' 'अनुमन्यताम्' 'दीक्षापतिः' सोमः। किञ्च, अञ्जसा' अनन्तर्हितम्, अहम् 'सत्यम्' उपगेयम्' उपगतवान्। योऽहमेतदस्पृशम्, स त्वं हे तानूनप्त्र! एवमुपगतवन्तं मा सुचिते' सुगते स्थाने, यत्र गतानां शोभनं गतं भवति, तत्र धेहि, अथवा प्रजायां जनयितव्यायां धेहि, यथा बहुपत्या स्याम तथा कुर्वित्यर्थः।

"दयति (२१)"—इति। एष शब्दः "अनेककर्मा" अनेकार्थः, तत्वनेकविकल्पप्रकृतिः,—यथा सुचितेशब्दस्य अन्येनान्येन धातुना विगृह्यानेकार्थत्वमुक्तम्,—इणा विगृह्य "सु इते"—इति गत्य-र्थत्वम्। सूतिना विगृह्य "सूते"—इति च प्रजार्थत्वम्, नैवमिह।

किन्तर्हि ? एकमन्त्रेणैवायं शब्दोऽनेकार्थो भवतीत्यस्
स्योपद्योतनार्थमुदाहरति। एवमुच्यमानेऽप्यनेकार्थत्वे
नेककर्मैवेत्येवमुक्तम्। अन्ये तु ब्रुवते,—यथा "सुचित्रं
नेकार्थोऽनवगतसंस्कारश्च, नैगमयम्। किन्तर्हि ? अ
पर्यायमिति॥

एवमनेकार्थत्वं प्रतिज्ञाय उदाहरणेनैवोपपादयति,—
पूर्वं दयमानाः स्याम"—"इति" एतस्मिन् मन्त्रे दयतीत्ये
"उपदयाकर्मा"। उपदयेति रक्षणमुच्यते। 'नवेन'
'पूर्वं' पुराणं 'दयमानाः' रक्षन्तः 'स्याम' पुराणेन च नवम्,
हि नवेन पुराणस्य च रक्षणं, पुराणेन च नवस्य, प्रसिद्ध
लोके। तस्मादिहायमुपपद्यते उपदयाकर्मा। चतुर्दशोऽ
इत्यस्य शेषः॥

"य एक इद् विदयते वसु"—"इति" एतस्मिन् मन्त्रे "
कर्मा वा, विभागकर्मा वा"। "य एक इद् विदयते वसु मर्
दाशुषे। ईशानो अप्रतिष्कुत इन्द्रो अङ्ग॥" इति (ऋ० सं०
६, ६, २)। राहुगणस्य गोतमस्यार्षम्। ऐन्द्री। उष्णि
'यः' इन्द्रः 'एकः इद्' एक एव स्वतन्त्रः 'वि' विविधं 'वसु'
'दयते' ददाति। कस्मै ? 'मर्त्ताय' मनुष्याय। किंलक्षणा
'दाशुषे' दत्तवते हवींषि। अथवा विभागकर्मा। 'दाशुषे'
'विदयते' विभजते इत्यर्थः। किंलक्षणः पुनरिन्द्रो दद
विभजते वा ? इति। उच्यते,—'ईशानः' ईश्वरः, 'अप्रतिष्कु
अप्रतिस्खलितः संग्रामेषु। 'इन्द्रः' 'अङ्ग' क्षिप्रं धनं ददा

भजते वा, 'दाशुषे' यजमानाय, तमहं स्तौमि, सोऽस्माकमेतत् रोत्वित्यभिप्रायः। ईशानः, इन्द्रः, अन्यत्र दानविभागाभ्यां शुषे यजमानाय वस्येकवाक्ये श्रूयमाणं किमन्यत् कुर्य्यात्? स्माद् वाक्यसामर्थ्यादत्र "दानकर्मा वा विभागकर्मा वा"— त्युपपद्यते ॥

"दुर्वर्त्तुर्भीमो दयते वनानि"—"इति" एतस्मिन् मन्त्रे दहतिकर्मा"। निगमप्रसक्तं निर्ब्रवीति,—"दुर्वर्त्तुः दुर्वारः" वारणीय इत्यर्थः। "अध जिह्वा पापतीति प्र वृष्णो गोषुयुधो शनिः सृजाना। शूरस्येव प्रसितिः क्षातिरग्नेर्दुर्वर्त्तुर्भीमो यते वनानि॥" इति (ऋ० सं० ४, ६, ८, ५)। आग्नेयी। रद्वाजस्यार्षम्। त्रिष्टुप्। प्रातरनुवाकाश्विनयोः शस्यते। पज्वलितस्याग्नेः 'अध' अथ, अनन्तरमेव तस्य 'जिह्वा' ज्वाला त्यु 'पापतीति' पुनः पुनः पतति, 'प्रवृष्णः' प्रवर्षितुः इन्द्रस्य गोषुयुधः' गवार्थं वाद्रे पणिभिः सह असुरैर्युध्यते, अथवा गोषु' अप्सु, मेघेन सह युध्यत इत्यर्थः। 'न'—इत्युपमा, इन्द्रस्य गोषु युध्यत इव। 'अशनिः' 'सृजाना' तेनैव सृज्यमानो यथा तति अशनिर्वज्रः, तथा अग्नेर्ज्वाला दाहदु पापतीति। किञ्च, शूरस्येव प्रसितिः क्षातिरग्नेः'। यथा कस्यचित् 'शूरस्य' वेक्रान्तस्य वा अप्रतिहतगतेः 'प्रसितिः' प्रसहनं संग्रामानुप्रवेश- ार्गः छिन्नभिन्नगणैः शत्रुभिः प्रकीर्णः स्यात्, एवमस्य 'अग्नेः' क्षातिः' दहनमार्गः, ईषत्प्लुष्टार्द्धदग्धभस्मीभूतैर्वृक्षैर्गुल्मादिभि- प्रकीर्य्यते। कदा पुनरेतद् भवति? 'दुर्वर्त्तुः' दुर्वारः, दावा-

र्तीभूतः, 'भीमः' सर्वप्राणिभयङ्करो यदायमग्निः 'दयते' दहति
किम्? 'वनानि'। एवमयमाग्नेये मन्त्रे वनशब्दसन्नि
श्रूयमाणे दयतिशब्दो दहनादन्यत् किमभिदध्यात्? इत्य
सामर्थ्यादिहायं "दहनकर्मा"—इत्युपपत्तिः॥

"विदद्वसुर्दयमानो विशत्रून्"—"इति" एतस्मिन् म
"हिंसाकर्मा"। "इन्द्रः पूर्भिदातिरद्दासमर्कैर्विदद्वसुर्दयमा
विशत्रून्। ब्रह्मजूतस्तन्वा वावृधानो भूरिदात्र आपृणद्रोद
उभे॥" इति (ऋ० सं० ३, २, १५, १)। विश्वामित्रस्ये
मार्षम्। त्रिष्टुप्। उक्थिद्वलभिदोर्निष्केवल्ये निविद्धानीय
सूक्तस्य प्रथमैवेयम्। 'इन्द्रः' 'पुर्भिन्' असुरपुरां मेघानां वा
भेत्ता, अद्भिः पूर्णा अपो वा पालयन्तीति मेघाः, पुरः, "पृ पालन
पूरणयोः (क्र्या० प०)"—इत्येतस्य। 'आतिरत्' अभिभव
'दासं' दासयितव्यं मेघम्। कैः सहायैः सह? 'अर्कैः' वृत्रै
देवैर्माध्यमिकैर्वा। किंलक्षणः पुनरसाविन्द्रः, य आतिरत्?
'विदद्वसुः' प्राप्तधनः। किं कुर्वन् आतिरत् दासम्? 'वि
मानः' विविधं हिंसन् 'शत्रून्' ये मेघवधप्रतिबन्धिनः। आह
किं विदद्वसुत्वेनैवैकेन गुणेन युक्तो य इन्द्रः, स एतदकरोत्
नेत्युच्यते,—'ब्रह्मजूतः' च ब्रह्मणा स्तुतिलक्षणेन 'जूतः' प्रा
प्रीतो वा, ब्राह्मणतन्वा शरीरेण 'वावृधानः' वर्धमानः 'आपृण
आपूरयति। 'रोदसी' द्यावापृथिव्यौ उभे अपि 'भूरिदात्रः' बहुदाना
इन्द्रो दासमातिरत्। एवमत्र "विदद्वसुर्दयमानो विशत्रून्"-
इति शत्रुसन्निधौ दयतेः किमन्यत् सामर्थ्यमुपपद्येतान्यत्र वधात्

"इमे सुता इन्दवः प्रातरित्वना सजोषसा पिवतमश्विना
तान्। अहं हि वां मूतये वन्दनाय मां वायसो दोषा दयमानो
अबूबुधत्"—इति। "दयमान इति"। अत्र दयतिर्गत्यर्थः।
दयमान उड्डीयमानः काकोऽन्तरिक्षेणाधस्तात् मां सुप्तं दोषायाम-
बोधयत्। मृग्योऽत्र शेषः॥

"नू चित् (३०)"—इति। एषः "निपातः" अनेकार्थत्वेनेह
समाम्नातः। न हि निपातानां प्रकृतिप्रत्ययादिसंस्कारोऽस्ति,
व्याख्यानवगतं स्यात्। स च पुनरयं "पुराणनवयोः" अर्थयोर्व-
र्तते। प्रकरणोपपदवशात् पुराणतां कस्यचिदर्थस्यावद्योतयति,
नवतां च कस्यचित्॥

"नू च (३१)"—"इति च"। अयमपि पुराणनवयोरर्थयो-
र्वर्त्तते। अयन्तु नू चिदित्येतस्यैवार्थसामान्यप्रसङ्गादसमाम्नात
चोदाहृतः॥

नू चिदित्यस्योदाहरणम्,—"अद्या चिन्नू चित्तदपो नदीनां
दाभ्यो अरदो गातुमिन्द्र। निषेदता अद्मसदो न सेदुस्त्वया
इदानि सुकृतो रजांसि॥"—इति (ऋ० सं० ४, ७, २, ३)।
वृद्धाजस्येयमार्षम्। त्रिष्टुप्। उक्थपर्य्यायेष्वच्छावाकस्य
स्त्रे माध्यन्दिने सवने विनियुक्ता। 'अद्य' च पुरा च, तदेव
कर्म 'नदीनां' वर्त्तते। कतमत्? 'तत्' उद्दिश्य वहनं कर्म।
कथं नाम? अस्य लोकस्योपकारायाजस्रमेता वहेयुरिति।
गातु' गमनमार्गम् 'आभ्यः' नदीभ्योऽर्थाय त्वम् 'अरदः' अखन-
स्त्वम्। किं गमनम्? गच्छन्त्यनेनेति गमनम्। हे 'इन्द्र!'

तदेव कर्माणि वर्तन्ते, तासां नदीनाम्, यथा च्छ
'त्वया'। ताभिरपि तदनुष्ठीयत इत्यभिप्रायः।
पुरस्तादपि, "इन्द्रो अस्मौ अरदत्"—इत्यत्र। एवं
त्वयैव नद्यधीनेनोपकारेणानुगृह्यते लोकः। किञ्च, 'नि
अप्रसदो न सेदुः'। यः एते 'पर्वताः' पर्ववन्तो मेघाः, 'अप्र
निष्पादयितव्यमन्नमस्माभिरित्येतदर्थमुद्दिश्यान्तरिक्षे लोके
दन्ति, अवतिष्ठन्ते, गच्छन्ति वा, तेऽपि युष्मद्वीर्योपवृं
पयोदकभूताः, नोर्चैर्भूयामत्र, निष्पत्त्यर्थं 'सेदुः' सीदन्ति
तदेवं कृत्वा (किं बहुना) सर्वथाप्युदकप्रदानद्वारेण त्वयैवै
हे 'सुकर्मन्! 'इदानि' इदीरितानि 'रजांसि' लोका इत्यं
त्वञ्चेदेवामेवमन्नमुदकञ्च न व्यधास्यः, सर्व एवैते लोका न
विष्यन्नित्यभिप्रायः। इहायं तस्य सन्निधौ वर्तमानो नूविदि
पुराणाभिधायीत्युपपद्यते। इह पुराणनवयोरित्युक्तम्,
पुराणाभिधायित्वस्यैतदुदाहरणम्, नवाभिधायिनः "नू कि
घायोरमृतं चिदस्येत्" अत्र हि वक्ष्यति,—"नवञ्च पुराणञ्चे

नू चेत्यस्योदाहरणम्,—"नू च पुरा च सदनं र
जातस्य च जायमानस्य च क्षाम्। सतश्च गोपां भवतश्च
दधा अग्निं धारयन् द्रविणोदाम्।" इति (ऋ० सं० १, ७.
२)। कुत्सस्येयमार्षम्। पृष्ठ्यस्य षष्ठेऽहनि 'अग्निमा
शस्त्रे जातवेदस्ये सूक्ते शस्यते। 'नू च पुरा च सदनम्'
च पुरा च सदनम्। कस्य? 'रयीणां' धनानाम्।
'जातस्य' उत्पन्नस्य 'जायमानस्य' 'च' अभिनिष्पद्यमानस्य .

न्य 'क्षाम्' निवासमित्यर्थः। "तस्मात् सर्वानृतून् पशवो-
मभिसर्पन्तीति विज्ञायते"। "यत्र गां शयानां निर्जगाति
येतामछिद्रान् मन्यतेऽन्यग्नौ हरी धेते प्रविशन्तीति च विज्ञा-
"। तस्मादुपपद्यते क्षान्तस्य निवासस्य चाग्नेः। 'सतश्च'
पन्नस्य भूतजातस्य 'गोपां' गोप्तारम्, 'भवतश्च' उत्पद्यमानस्य
ः' वसूनः, गोप्तारमित्यनुवर्तते। स एवंलक्षणोऽग्निस्त
विणोदां' धनस्य दातारम्, 'देवाः' 'धारयन्' धृतवन्त इत्यर्थः।
? हविर्वहनकर्मणि ? "अथा देवा दधिरे हव्यवाहम्"—
ति वक्ष्यति। एवमिह पुरा चेत्यस्य सन्निधौ नू चेत्येव शब्दे
र्तमानो नवाभिधायित्वमुपपद्यते। पुराणाभिधायित्वे पर्व्वोप्य
स्योदाहरणम् ॥ १ (१७) ॥

विद्याम तस्य ते वयमकूपारस्य दावने। विद्याम
तस्य ते वयमकुपरणस्य दानस्यादित्योऽप्यकूपार उच्यतेऽ
कूपारो भवति दूरपारः समुद्रोऽप्यकूपार उच्यतेऽकूपारो
भवति महापारः कच्छपोऽप्यकूपार उच्यतेऽकूपारो न कूप
मृच्छतीति कच्छपः कच्छं पाति कच्छेन पातीति वा
कच्छेन पिबतीति वा कच्छः खच्छः खच्छदोऽयमपीतरो
नदीकच्छ एतस्मादेव कमुदकं तेन छाद्यते। शिशी
भृङ्गं रक्षसे विनिक्षे। निश्यति भृङ्गं रक्षसो विनिक्षणा

स हि "न कूपमृच्छति" अल्पोदकत्वात्, किं तर्हि? प्रकीर्णमुदकम्, तत् स्थानं गन्तुमिच्छति, समुद्रं नदीं आख्यानप्रसक्तमुच्यते,—"कच्छपः" "कच्छम्" आत्मनो सम्पुटं "पाति" रक्षति, स हि किञ्चिद् दृष्ट्वा स्वशरीरे मुखसम्पुटं प्रवेशयति, सम्पुटे हि कच्छशब्दः प्रसिद्धः वाच्यः कच्छपुट इति च। "कच्छेन" कटाहेन पातीति वा, स हि किञ्चिद् दृष्ट्वा सर्वाण्यङ्गानि कटाह प्रवेश्य कूर्मत्वेनैवावतिष्ठते। अथ "वा" "कच्छेन" "पिबतीति" कच्छपः। विग्रहप्रसक्तः कच्छशब्दो य एष कच्छो मुखसम्पुटः कटाहो वायं कच्छः, भवति? "खच्छः"—इत्युच्यते, स हि "खच्छदः" छादयति, स हि मध्ये सुषिरो भवति। "अयमपीतरो कच्छ एतस्मादेव" कसमुखकेन उदकेन "छाद्यते" इति कच्छः॥

आदित्योऽप्यकूपारः, समुद्रोऽप्यकूपारः, कच्छपोऽप्यकूपारः —इत्येतेषु निगमाः पर्येष्याः॥

"शिशीते (३४)—इति। एतदनवगतम्। "निश्यति"— वगमः। "वि ज्योतिषा बृहता भात्यग्निराविर्विश्वानि मह्त्वा। प्रादेवीर्मायाः सहते दुरेवाः शिशीते शृङ्गे विनिशे॥" (ऋ० सं० ३, ८, १५, ३)।—इति निगमः। बृषो जनपुत्रस्तस्येयमार्षम्, आत्रेयस्य वा कुमारस्य, उभयोः प्रातरनुवाकाश्विनयोः शस्यते। 'वि भाति' 'अग्निः' नानाप्र । केन? 'बृहता ज्योतिषा'। स एवं विभासम

करोति ? 'आविर्विश्वानि कृणुते' 'आविष्करोति' प्रकाशी-
ति 'विश्वानि' सर्वाणि भूतानि। 'महित्वा' महत्त्वेनेत्यर्थः।'
त, "अदेवीर्मायाः सहते" 'प्रसहते' प्रकर्षेणाभिभवति।'
? 'अदेवीर्मायाः' आसुरीरित्यर्थः। 'दूरेवा' दुरवाः, दुस्तर्पा
न ह्यग्नेस्तृप्तिरस्ति। किञ्च, 'शिशीते शृङ्गे' यथा हि वृषभ-
अभिघ्नन् शृङ्गे तीक्ष्णीकरोति, एवमग्निरपि दारूणि दहंस्ती-
करोति ज्वालाः। कमर्थं पुरस्कृत्य ? "रक्षसे विनिक्षणाय"
हिंसनायेत्यर्थः॥ अत्र शृङ्गशब्दसन्निधानात् "शिशीते"—
स्य तीक्ष्णार्थत्वम्, तीक्ष्णीकृतैर्हि विभिर्विनिक्षणनमुपपद्यत'
॥ निगमप्रसक्तमुच्यते,—रक्षः रक्षितव्यम्" हि शरीरमस्मा-
ति, रक्षो हि मानुषान् भक्षयति। "रहसि वा" विविक्ते प्रदेशे
: "क्षणोति" हिनस्तीत्यर्थः। "रात्रौ नक्षते" गच्छति—
ति वा" रक्षः॥

"सुतुके (२५)"—इति। एतदनवगतम्। पक्षेण याने-
र्थम्। "सुतुकन."—इत्यवगमः, "सुतुकनैरिति वा" "स आ
मंहि न आ च सत्सि दिवस्पृथिव्योररतिर्युवत्योः। अग्निः
तुकः सुतुकेभिरश्वै रभस्वद्भी रभस्वाँ एह गम्याः॥"—इति निगमः
(ऋ सं० ७, ५, ३१, ७)। त्रितस्यैयमार्षम् आप्त्यस्य। प्रातरनु-
वाश्विनयोः शस्यते यस्त्वं 'दिवस्पृथिव्योः' 'युवत्योः' समिन-
भवन्त्योः यानि भूतानि अन्तरा वर्त्तन्ते, तेषां सर्वेषाम् 'अरतिः'
प्रेयालमतिः, पर्याप्तमतिरित्यर्थः। 'सः' एवंलक्षणस्त्वमस्माकम्
'यक्षि' आह्वयसि देवान्, 'महि' महत इत्यर्थः। स एवम्,

'आसत्सि च' आसीदसि च होतृत्वे। 'अग्निः'—इत्येत
सम्बोधनत्वेन विपरिणम्यते, 'आ वक्षि'—'आ च सत्सि'—
मध्यमपुरुषयोगान्मन्त्रस्य। हे अग्ने! यस्त्वमेवङ्गुणयुक्त 'सु
"सुतुकनः" सुगमन इत्यर्थः, अथवा "सुप्रजाः"। तुगित्य
नामसु पठितम् हिरण्यमपत्यमभिप्रेतमग्नेः, "हिरण्यरेता अ
—इति श्रूयते, "अग्नेरपत्यं प्रथमं सुवर्णम्"—इति च। 'सुतु
सुगमनैरश्वैः, अथवा "सुप्रजोभिः" कुलजैरित्यर्थः। अ
शोभना प्रजा येषां ते सुप्रजाः, शोभनानामेवाश्वानां शोभ
प्रजा भवन्तीति प्रजाद्वारेण चाग्निः स्तूयते। अथवा स एवा
'सुतुकः' "सुप्रजाः" अपत्यश्चास्य सर्वाः प्रजाः, ताश्च प्रति कल्प
इति "सुप्रजाः"। 'रभसद्भिः' त्वरितैः 'रभस्वान्' स्वयं च त्वरि
'एह गम्याः' आगच्छस्त्वं हि कर्माणि, नित्यं हवींषि वोढुम्, क
सर्वेदमित्यभिप्रायः। एवमेतदिह "सुतुकः"—इत्यग्निविशेषण
सुतुकनैरश्वैरित्येतस्मात् तृतीयासम्बन्धादित्युपपत्तिः॥

"सुप्रायणाः(३६)"—इति। एतदनवगतम्। "सुप्रगमना"
इति शब्दप्रतीतिः। यज्ञगृहद्वारोऽभिधेया यास्कमतेन, शाक
भर्विदः। "होता यक्षद् दुरः सुप्रायणा ऋतावृधो द्वारो देवीर्हिरण्ययीर्ब्रह्माण
मिन्द्रं वयोधसम्। पङ्क्तिं छन्द इहेन्द्रियं तुर्यवाहं गां वयो दधद् व्यन्त्वाज्यस्य होतर्यज॥"—इति निगमः (य० क
मं० या० मं० २८, ५)। मैत्रावरुणो ब्रवीति,—'होता यक्ष
होता यजतु। किम्? एताः 'दुरः' यज्ञगृहद्वारः, अथवैता अग्न
विदः। 'ऋष्वाः' महान्तः, अथवा हिंस्राः, हाप्येव हि यो नि

णीयः, स हिंस्यते, अर्चिषान्तु हिंस्रत्वमुपपद्यत एव। 'कवष्यः'
वेकर्त्तिताः, कुपिता इत्यर्थः, कपाटवत्यो वा यज्ञगृहद्वारः।
अकोपधावनीः' अकोशधावनीः, तासु हि संवृतासु द्रव्यकोशाः
सुरक्षा भवन्ति, अर्चिष्वपि हविः प्रक्षिप्तं नान्यतो धावति, किं
र्हि? देवानेव प्राप्नोति, एतदकोपधावनीत्वमर्चिषाम्। एवंलक्षणा
ता द्वारः, अर्चिषो वा 'उद्‌ताभिर्जिहताम्' 'उज्जिहताम्' उत्ति-
न्तु, 'आताभिः' दिग्भिः, 'विश्रयन्ताम्' च 'पक्षोभिः' विश्रियन्ते
कवाटसंवरणैः द्वारः, अर्चिषस्तु हविषोऽनुप्रवेशार्थम् पक्षोभिः
वैरेवावयवैर्विश्रयन्ताम्। विवृताश्च सत्यः 'सुप्रायणाः' "सुप्रग-
मनाः" भवन्तु ऋत्विजं प्रति द्वारः, अथ पुनरर्चिषस्ततो हविषः
सुप्रगमनाः सन्तु। सामान्यमेवेदमाशास्तं यत्, पुनस्तस्मिन्नेव
र्त्तमाने कर्मण्याशास्ते,—'अस्मिन् यज्ञे,' विश्रयन्ताम्' विवियन्ताम्
ऋतावृधः' यज्ञवर्द्धयित्र्यः। या एता एवंलक्षणा द्वारः, अर्चिषो
॥, ता अस्याः 'आज्यस्य व्यन्तु' य आसां स्वांशः, तं पिबन्तु।
'होतः!' त्वमपि मया प्रेषितः 'यज' एताः॥ एवमेषः 'सुप्रा-
णाः'—इति द्वारामर्चिषां वा सन्निधौ श्रूयमाणः सुप्रगमनाभि-
ायीत्युपपद्यते॥ २ (१८)॥

देवा नो यथा सद मिद्वृधे असन्नप्रायुवो रक्षितारो
दिवेदिवे॥ देवा नो यथा सदा वर्द्धनाय स्युरप्रायुवोऽप्र-
ाद्यन्तो रक्षितारश्चाहन्यहनि च्यवन ऋषिर्भवति च्याव-

'यिता स्तोमानां च्यवानमित्यप्यस्य निगमो भवति।
'च्यवानं सनयं यथा रथं पुनर्युवानं चरथाय तक्षुः।
च्यवनं सनयं पुराणं यथा रथं पुनर्युवानं चरणाय
थुर्वा प्रयौति कर्माणि तक्षतिः करोतिकर्मा रजो
ज्योती रज उच्यत उदकं रज उच्यते लोका
न्तेऽसृगहनी रजसी उच्येते ( रजांसि चित्रा वि
तन्यत इत्यपि निगमो भवति ) हरो
उच्यते ( उदकं हर उच्यते ) लोका हरांस्युच्य
( असृगहनी हरसी उच्येते । प्रत्यग्ने हरसा हरः शृणी
त्यपि निगमो भवति ) जुहुरे विचितयन्तः । जु
विचेतयमाना व्यन्त इत्येषोऽनेककर्मा । पदं दे
नमसा व्यन्त इति पश्यतिकर्मा । वीहि शूर पुरोडा
मिति खादतिकर्मा । वीतं पातं पयस उस्रिया
अश्नीतं पिबतं पयस उस्रियाया उस्रियेति गोनामो
विणोऽस्यां भोगाः ( उस्रेति च )। त्वामिन्द्र मति
सुते सुनीथासो वसूयवः । गाभिः क्राणा अनू
गोभिः कुर्वाणा अस्तोषतः । आ तू पिञ्च हरि
द्रोरुपस्थे वाशीभिस्तक्षताश्मन्मयीभिः । आसिञ्च

ारुपस्य द्रुममयस्य हरिः सोमो हरितवर्णोऽयमपीवरो
रितस्मादेव। वाशीभिस्तक्षताश्मन्मयीभिः। वाशी-
रश्ममयीभिरिति वा वाग्भिरिति वा। स शर्द्धद्र्यो
षुणस्य जन्तोर्मा शिश्नदेवा अपिगुर्ऋतं नः। स
त्सहतां यो विषुणस्य जन्तोर्विषमस्य मा शिश्नदेवा अब्र-
ाचर्य्याः शिश्नं श्नथतेः। अपिगुर्ऋतं नः। सत्यं वा
ज्ञं वा॥ ३ (१६)॥

"अप्रायुवः (२७)"—इति। एतदनवगतम्। "अप्रमाद्यन्तः"
-इत्येवमर्थप्रतीतिः। "आ नो भद्राः क्रतवो यन्तु विश्वतोऽ-
ब्धासो अपरीतास उद्भिदः। देवा नो यथा सद मिद् वृधे
ासन्नप्रायुवो रक्षितारो दिवेदिवे॥"—इति निगमः (ऋ० सं०
, ६, १५, १)। गोतमस्येयमार्षम्। अग्निष्टोमे महाव्रते
ृतीयसवने वैश्वदेवे शस्त्रे शस्यते। 'आ यन्तु' उपयन्तु, अस्मान्
भद्राः' भन्दनीयाः, स्तुत्याः। 'क्रतवः' सोमक्रतवः, कामा वा।
विश्वतः' सर्वतः, सर्वदैव यथाविहितेषु कालेषु। 'अदब्धासः'
नुपहताः, अविगुणाः, कैश्चिदपि दस्युभिः। 'अपरीतासः'
अपरिज्ञातपूर्वाः, असच्छत्रुभिः। 'उद्भिदश्च' उद्भेत्तारः, एषां
याणामपि लोकानाम्, येषां फलेनैतान् त्रीनपि लोकानुद्भिन्दी-
ग्रहि, ते आगच्छन्तु। किञ्च, तथा च तेऽस्यर्थमविगुणा आग-
च्छन्तु, 'यथा' तैः परितोषिताः सन्तः 'देवाः' सदैव नित्यमेषाः

सार्धं वर्द्धनायोद्यताः 'असन्' स्युरित्यर्थः, भाष्येऽपि "स्यु"
इत्येव पाठः । 'अप्रायुवः' अप्रमाद्यन्तः, प्रमादमकुर्वाणाः, अ
म्मुह्यमाना इत्यर्थः । वर्द्धयितारो 'रक्षितारः' च । दिवे
अहन्यहनि यथा स्युस्तथा ते सोमक्रतवः, सगुणाः काम
आगच्छन्तु । अत्र "अप्रायुवो रक्षितार"—इति रक्षितृत्वे
समानार्थसन्निवेशादप्रायुवशब्दस्याप्रमादार्थत्वम्, रक्षणे
सत्यप्रमादस्येष्टत्वात् ॥

"च्यवनः(३८)"—इति । एतदनवगतम् । "च्यावन"
इत्येवमर्थप्रतीतिः । "ऋषिर्भवति"—इत्यभिधेयवचनम्'
धानम्"—"इति" एवम् "अप्यस्य" ऋषेर्भृगुपुत्रस्य छ
"निगमाः" सन्ति । च्यवन इति प्रसिद्धमेवेति कृत्वा नि
न पठति, इतरथा त्वप्रसिद्धमल्पप्रयोगश्च तदिति कृत्वा पठति
"युवं च्यवानं सनयं यथा रथं पुनर्युवानं चरथाय तक्षथुः
निष्टौग्रम् यमूहथुरद्भ्यस्परि विश्वेत् ता वां सवनेषु प्रवाच्या॥"
इति (ऋ० सं० ७, ८, १५, ४)। काक्षीवत्या घोषाया इयम्
र्घम्। प्रातरनुवाकाश्विनयोः शस्यते। अश्विनावुच्येते,
अश्विनौ! "युवां" 'च्यवानम्' ऋषिं च्यावयितारं स्तोमाना
'सनयं' वृद्धं गमनासमर्थं सन्तम् 'यथा' चिरन्तनं 'रथं' गमन
समर्थं कश्चिच्छिल्पी गमनसमर्थं कुर्य्यात्, एवं 'पुनः युवान
च्यवनमृषिं 'चरथाय' "चरणाय" गमनार्थम् 'तक्षथुः' कृतवन्तौ
स्थ इत्यर्थः। किञ्च, 'निष्टौग्रम् यमूहथुः' निरूहथुः, निर्द तवन्तौ
, 'तौग्र्यं' तुग्राणामपां सङ्घातं मेघानाम्। क पुनः निरूहथुः!

मनुष्यस्परि' चिरन्तनीनामन्यासामपामुपरि, अनुपर्शानास्येवा-यासु पार्थिकासप्सु, तासामेवोपरि लोकानुग्रहार्थमन्यमुदक-राशिं निरूहयुः। तान्येवमादीनि कर्माणि 'विश्वा' विश्वानि, सर्वाणि। युवयोः 'सवनेषु' यज्ञेषु, प्रातःसवनादिषु वा 'प्रवाच्या' प्रकर्षेण वचनीयानि स्तोतृणाम्॥ एवमेतस्मिन् मन्त्रे "च्यवानः" —शब्देन च्यवन एव ऋषिरुक्तः, स हि श्रूयते सौकन्ये आख्याने, —जीर्णः सन्नश्विभ्यां पुनर्युवाकृत इति। तस्मादुपपद्यते निगम-प्रसक्तमुच्यते,—"युवा, प्रयौति कर्माणि" मिश्रयति। "तक्षतिः करोतिकर्मा" करोतीत्यर्थः॥

"रजः (३१)"—इति। अनेकार्थम्। "रजतेः"—इति व्युत्पत्तिः॥ "ज्योती रज उच्यते" तद्धि अनुरञ्जयति द्रव्याणि स्वेन प्रकाशेन। "या ते अग्ने रजःशया तनूः"—इत्येवमादुदा-हरणं द्रष्टव्यम्। भाष्यकारस्तु प्रचुरत्वादेतेषु निगमान् न पठति॥

"उदकं रज उच्यते" तदपि हि स्वेन स्नेहाख्येन गुणेनानुरञ्ज-यति। "भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिः सचसे शिवाभिः। दिवि मूर्द्धानं दधिषे स्वर्षां जिह्वामग्ने चकृषे हव्यवा-हम्॥"—इति निगमः (ऋ० सं० ७, ६, ४, ६)। हे अग्ने! त्वमेवास्य 'यज्ञस्य' 'भुवः' पृथिवीलोकादमुं लोकं 'नेता'। रजसः उदकस्य च नेता, "अग्निर्वा इतो वृष्टिं समीरयति"—इति हि वक्ष्यति। क्व पुनर्नेता? 'यत्र' यस्मिन् लोके 'नियुद्भिः' अश्वजातिभिः 'शिवाभिः' सुखतमाभिः सहितं 'वायुम्' अन्तरिक्ष-स्थानं 'सचसे' संसेवसे त्वम्, तत्र नेता, मध्यस्थानानां देवानां

क्षिपसे। किञ्च, त्वमेव 'दिवि' अवस्थितः
'दधिषे' धारयसि। यस्मिन्निष्पन्ने नैनो लोकाद्धतेन
'स्वः' स्वराख्यमादित्यम्। किञ्च, त्वमेव एतां
अत्यद्भुताम्, आत्मनः सकाशात् 'चक्रषे' पुनः पुनः करोषि।
असन्प्रदत्तानि हवींषि उपक्षिपति,
वयमेतस्मिन् कर्मणि 'हव्यवाहं' हविषां वोढारम्,
त्वेन 'हविषा' यजामः। पौर्णमासस्याग्नेयस्य हविषो

"लोका रजांस्युच्यन्ते" नेष्वपि हि प्राणिनो रज्य
"त्वया दृढानि सुकतो रजांसि" (ऋ० सं० ४, ७, २, ३)
व्याख्यातो निगमः॥

"असृगहनी, रजसी उच्येते"। असृग् रुधिरम्, अ
च अहश्च असृगहनी, ते अपि रजसी उच्येते। "मासि म
रजो ह्यासां दुष्कृतान्यपकर्षति"—इति रुधिरस्योदाहरण
"अहश्च कृष्णमहरर्जुनञ्च"—इत्यह उदाहरणम्॥

"हरः (४०)"—इत्येतदनेकार्थम्। "हरतेः"—इति व्युत्पत्ति
"ज्योतिर्हर उच्यते" तद्धि ह्रियते, हरति वा स्नेहम्, विरु
करोति। हरति वा तम इति हरः। "या ते अग्ने हरश्च
तनूः" "अग्ने यत्ते हरस्तेन तं प्रति हर"—इत्येवमादयः प्रचु
एव निगमा इति अत्रापि भाष्यकारो न पठति॥

"उदकं हर उच्यते" तद्धि ह्रियते प्राणिभिः जीवनाय॥

"लोका हरांस्युच्यन्ते" तेभ्यो हि क्षीणपुण्याः प्राणिनो
॥

"जुहुरे (४१)"—इति। एतदनवगतम्। "जुह्विरे"—इत्यवगमः। "जुहुरे विचितयन्तोऽनिमिषं नृम्णं पान्ति। आदृढां पुरं विविशुः॥"—इति (ऋ० सं० ४, १, ११, २)। यद्वे रात्रेय-स्यार्षम्। जुहुरे, जुह्विरे, जुह्वति। योऽग्निं 'विचितयन्तः' "विचेतयमानाः" कर्मकर्तृसाधनानां याथार्थ्यं वेदान्तदर्शनेन जानानाः, ये च नराः 'अनिमिषम्' आदरवद्वक्षानमात्मनः कृत्वा युक्तात्मानो 'नृम्णं' योगबलमात्मनः कर्मणि वर्त्तमाने 'पान्ति' रक्षन्तीत्यर्थः। आह,—ये एवं गुणयुक्ताः, किं तेषाम्? इति। उच्यते,—'आ दृढां पुरं विविशुः' ते 'दृढां' नित्यम्, अनावृत्तये परब्रह्ममयीं 'पुरम्' इमामदृढां शरीरपुरं पाविध्यं हित्वेत्यभिप्रायः॥ विचेतयमाना हि वेदप्रामाणिकाः सन्तो हवनादृते किमन्यत् कुर्य्युः, येन दृढां पुरमाविशेयुः? शब्दसारूप्यमपि च "जुहुरे"— इत्येतस्मिंश्छन्देऽस्त्येव। प्रकरणाच्चेयमाग्नेयी ऋक्। तस्मात् "जुहुरे"—इत्येव शब्दो हवनार्थ एवेत्युपपद्यते॥

"व्यन्तः (४२)"—इत्येषोऽनेककर्मा। यस्माद्धातोरयं शब्दो निष्पद्यते, स धातुरनेककर्मा, अनेकार्थः। "वी गतिप्रजननका-न्त्यशनखादनेषु (अदा० प०)"—इति। तद्यथा,—"पदं देवस्य नमसा व्यन्तः श्रवस्यवः श्रव आपन्नमृक्तम्। नामानि चिद्द दधिरे यज्ञियानि भद्रायां ते रणयन्त संदृष्टौ॥"—इति (ऋ० सं० ३, ४, ३५, ४)। इत्यत्र "पश्यतिकर्मा"। भरद्वाजस्येयमार्षम्। प्रातरनुवाकाश्विनयोः शस्यते, पशौ च विनियुक्ता। 'पदं' स्थानम्, यज्ञस्थानं याथार्थ्यम्, 'अग्नेः' 'देवस्य' दानादिगुणयुक्तस्य 'व्यन्तः'

पश्यन्तो जानानाः। केन? 'नमसा' नमस्कारेण, '
मन्त्रेणेत्यर्थः। मन्त्रार्थपरिज्ञानादेव ह्यग्नेराध्यात्माधि
यज्ञेष्ववस्थानं याथार्थ्यतो दृश्यते। पदशब्दो हि
पदस्थोऽयमिति हि वक्तारो भवन्ति लोके।
अन्नेन, हविराख्येनाभ्युद्यतेनेति योज्यम्। 'श्रवस्यवः'
इच्छमानाः, अन्नमात्मनः प्रार्थयमानाः। य एवमग्नेः
विद्वांसो याथार्थ्यम्, अन्नैर्वा अभ्युद्यतैः श्रव इच्छमानाः
ऽग्निमुपासते। किन्तेषाम्? इति। उच्यते,—'श्रव
किंलक्षणं पुनराप्नुवन्ति? 'अमृक्तम्' अमृदितम्,
मन्यैः। किञ्च, 'नामानि चित्' ये चैते
केवलच्छान्दसाः, नामान्यपि च मन्त्रभावेनावस्थितानि
अनर्थकाः, 'यज्ञियानि' यज्ञार्हाणि, तेऽपि "भद्रायां"
अग्नेः 'सन्दृष्टौ' सन्दर्शने 'रणयन्त' रमयन्त्यात्मानम्।
भद्रेण चक्षुषा पश्यत्येवाग्निरित्यभिप्रायः॥

एवमेतस्मिन् मन्त्रे "पदं देवस्य नमसा व्यन्तः श्रवस्यव
मायन्"—इत्येतेषां पदानामेकवाक्ययोगात् "व्यन्तः"
शब्दस्य पश्यत्यर्थोऽप्युपपद्यते॥

"इमा ब्रह्म ब्रह्मवाहः क्रियन्त आ बर्हिः सीद।
वीहि शूर पुरोडाशम्॥"—इति (ऋ॰ सं॰ ३, ३, ३, ३)। इत्यत्र
निष्कर्मा"। विश्वामित्रस्यैवमार्षम्।
पत्यावे ब्राह्मणाच्छंसिनः शस्त्रे विनियुक्ता। 'इमा' इमा
ब्रह्माणि, अस्मदनुष्ठानाख्यानि स्तोत्राण्युक्थानि

अस्माभिः ब्रह्मणोऽस्य हविषः वहनसमर्थानि, त्वां प्रतिक्रियन्ते, उच्यन्त इत्यर्थः। यत्नो ब्रवीति,—हे इन्द्र! 'आ बर्हिः सीद' आसीदेदं बर्हिः प्रति। आसीनश्चैतस्मिन् बर्हिषि, 'वीहि' भक्षय एतमस्मत्प्रदत्तं हे 'शूर'! 'पुरोडाशम्'॥ एवमेतस्मिन् मन्त्रे "वीहि शूर पुरोडाशम्"—इत्येतस्मादेकवाक्यसंयोगात् "वीहि"—इत्येष शब्दः खादनार्थः प्रतीयति, किमयं बर्हिष्यासीन इन्द्रः पुरोडाशस्यान्यत्र भक्षणात् कुर्य्यात्? प्रसिद्धञ्च लोके कठिन-द्रव्यस्य भक्षणम्, भक्षयति मोदकादीनि। तस्मात् सामर्थ्याद्भक्षणार्थोऽयमित्युपपद्यते॥

"वीतं पातं पयसः"—इत्यत्राशनार्थः। "उत वां विक्षु मद्यास्वन्धो गाव आपश्च पीपयन्त देवीः। उतो नो अस्य पूर्व्यः पतिर्दन् वीतं पातं पयस उस्रियायाः॥"—इति (ऋ० सं० २, २, २३, ४)। मैत्रावरुण्येषा। त्रिष्टुप्। दीर्घतमस आर्षम्। मित्रावरुणावुच्येते,—'उत वां' अपि युवयोः, एतासु 'विक्षु मद्यासु' एतेषु मनुष्येषु मदयितृषु वर्त्तमानमेतत् 'अन्धः' हविर्लक्षणम्, यदि तस्मिन्नहनि मनुष्यैः भवद्भ्यां देयं पयस्याख्यम् आज्याख्यञ्च। तदेव 'गावः' एताः 'च आपः' 'देवीः' दानादि-गुणयुक्ताः। आसां गवामुपकारं कुर्वन्त्यः, 'पीपयन्त' वर्द्धयन्ती-त्यर्थः। यदेतदशनपानयोग्यम्, आज्यं सान्नाय्यलक्षणम् आमि-क्षदुमिर्गाभिश्च युवयोरन्धो वर्ध्यते। 'उतो न अस्य' अप्यस्य हविषोऽस्मत्पूर्वो यजमानः पतिः। पूर्वं हि द्रव्यस्य यजमानः पतिर्भवति, तदनन्तरं स तद् ऋत्विग्भ्यः समर्पयति—'देवतायै

ह्यु क्तम्। अथवाऽयमन्योऽस्यार्द्धस्यार्थः,—हे उन्नेतः! प्रक्षारय, तं हरितवर्णं सोमममनेन कलशेन। क्व? द्रोणकलशस्योपरि। यूयमपि च हे होतारः! एनं सोमं 'वाशीभिः' "वाग्भिः" स्तुतिलक्षणाभिः 'तक्षत' संस्कुरुत, यदस्यायज्ञियमपूतं, तत् स्तुतिभिः 'अश्मन्मयीभिः' व्यापनसमर्थाभिरित्यर्थः। यूयमपि हे अध्वर्यवः! पूतमेतमुन्नातृभिः, सोमं 'परिष्वजध्वं' ग्रहेषु, स्था च। 'कक्ष्याभिः' अङ्गुलीभिः, अङ्गुलिभिरेव हि सोमो गृह्यते। यदेव चेदं ग्रहणमेव एव तस्य परिष्व परिष्वज्य च गृहीत्वा एनं सोमम् 'उभे' हविर्धाने-'धुरी' 'प्र 'वह्निम्' इव, वोढारमिव, अनड्वाहं 'युनक्त' एनं सोमं साद यर्थः। न हि सोमो हविर्धानधुरोः अधस्तात् वरे साधं एतस्मादेव यानुडुद्योजनदेशं प्रति सामान्याद्वह्निमिव युनक्त धुरोरममुपपद्यते। अत्र "वाशीभिस्तक्षते"—इति लक्षणयोग अश्ममयो वाश्य एता ग्रावाख्या इति प्रथमस्यार्थस्योपपत्तिः एतस्मिन्नर्थे 'आ सू सिञ्च'—इत्यासेकशब्दो गौणः, न हि सोमानाम् अनभिषुतानाम् आसेकोऽस्ति कठिनत्वात्, तस्मादेतस्मिन्नर्थे प्रक्षेपणमात्रमेव सिञ्चतेरर्थः। अथवा 'आसिञ्चत हरिं द्रोणकलशे'—इत्यनोऽनन्तरं वाशी शब्दः श्रूयमाणो वाङ्नामधेयस्यैवाभ्युपपद्यते एव, सोमो हि द्रोणकलशस्योपरि आसिच्यमाने वाग्भिः स्तूयते। एवमर्थद्वयमभिप्रेत्य उभयथा भाष्यकारेणोक्तम्—"वाशीभिरश्ममयीभिरिति वा वाग्भिरिति वा"—इति।

"अयमपीतरो हरिः" मर्कटः, "एतस्मादेष" इति, हरित-
र्णत्वाद्धरिरुच्यते, "शिरीषकुसुमप्रख्याः केचित् पिङ्गलकप्रभाः,
नराः"—इति श्रूयन्ते रामायणे ॥

"विषुणस्य (४५)"—इति। एतदनवगतम्। "विषमस्य"—इत्यवगमः। "न यातव इन्द्र जूजुवुर्नो न वन्दना शविष्ठ वेद्याभिः। स शर्द्धदर्यो विषुणस्य जन्तोर्मा शिश्नदेवा अपि गुर्ऋतं नः॥"—इति (ऋ० सं० ५, ३, ३, ५)। वसिष्ठस्येयमार्षम्। त्रिष्टुप्। उन्नीयमानसूक्ते माध्यन्दिने सवने शस्यते। हे भगवन्! "इन्द्र!" तथा, कुरु यथा 'न' इममस्मद्यज्ञं 'यातवः' यातयितारः, यज्ञविघ्नकर्त्तारः, केचिदपि 'जूजुवुः' आगच्छेयुरित्यर्थः? किञ्च, हे 'शविष्ठ' बलिष्ठ! य एते 'वन्दनाः' वन्दितारः, लाड(ट?)गौडादयः, जानपदीभि 'वेद्याभिः' आकृतिभिर्युक्ताः, किं ब्राह्मणा एते स्युः, उतान्यजातीयाः केचिदिति? अथवा आवेदितव्याभिः प्रवृत्तिभिः युक्ताः न हि तासां प्रवृत्तीनामन्तोऽस्ति, याभिस्ते प्रवर्त्तन्ते चपलत्वात्। किञ्च, येऽपि चैते श्रोत्रिया अपि सन्तः 'शिश्नदेवाः' शिश्ने नित्यमेव प्रकीर्णाभिः स्त्रीभिः साकं क्रीडन्त आसते, श्रौतानि कर्माणि उत्सृज्य, तेऽपि युष्मदनुग्रहादिदमस्माकम् 'ऋतं' यज्ञम् 'मा अपिगुः' मा आगच्छन्तु, नास्माकं तैरपि यज्ञमभिगच्छद्भिरर्थोऽस्तीत्यभिप्रायः। आह,—कीदृशास्तर्हि यज्ञमागच्छन्त्विति? उच्यते,—'स शर्द्धत्' स एवोत्सहतामिममस्मद्यज्ञमागन्तुम्, य एव 'अर्य्यः' ईश्वर आत्मीयानामिन्द्रियाणाम्; जितेन्द्रिय इत्यर्थः। यश्च 'विषुणस्य "विषमस्य" यज्ञविध्वंसयितुः 'जन्तोः' मनुष्यस्य

निग्रहाय समर्थः, येन परिपाल्यमाना एतं यज्ञमयिच्चेन मनते महीत्यभिप्रायः ॥ एवमेतस्मिन् मन्त्रे "यातयो यन्दता मिं देवाश्च मा आगच्छन्तु" इति प्रतिनिर्देश्येनेषु नि. 'स शर्द्धदर्य्यः'—इति श्रूयमाणमर्थं यूत्तमनुष्याभ्यागमनविषये द्रवति, तस्येत्यात्, स चाभ्यागतः मन्त्रवशं 'विगुणस्य' मस्य" मनुष्यस्य निग्रहं करोति, तस्मात् "विगुणस्य विषमस्येत्युपपद्यते। यदा तु ऋतशब्दस्य "सत्यं वा"—इत्ये दर्थवचनं भवति तदाऽस्माकम् 'ऋतं' सत्यम्, एवंलक्षण मापकर्माणः 'मा अपिगुः'—इत्येवं योज्यम्। अपिगुरिति गमिस्तदा ज्ञानार्थः। एवमप्युपपद्यत इत्यतो भाष्यकारेणोक्त —"सत्यं वा यज्ञं वा"—इति ॥ ३ (१९) ॥

आ घा ता गच्छानुत्तरा युगानि यत्र जामयः कृणव न्नजामि। उप बर्बृहि वृषभाय बाहुमन्यमिच्छस्व सुभगे पतिं मत् ॥ आगमिष्यन्ति तान्युत्तराणि युगानि यत्र जामयः करिष्यन्त्यजामिकर्माणि जाम्यतिरेकनाम बालिशस्य वासमानजातीयस्य वोपजन उपधेहि वृषभाय बाहुमन्य मिच्छस्व सुभगे पतिं मदिति व्याख्यातम् ॥ ४ (२०) ॥

"जामि (४६)"—इति। एतदनेकार्थम्। भगिनी, बालिश पुनरुक्तञ्चास्याभिधेयानि। प्रकरणादेवैतेषामन्यतममस्मिन्न तिष्ठते। यथानेन तावद्भगिन्युच्यते, तथेदमुदाहरणम्,—"आ

घा ता०—०मत्"—इति (ऋ० सं० ७, ६, ७, ५)। इयं यमी किल यमं प्रार्थयाञ्चकार,—एहि मैथुनाय सङ्गच्छावहा इति, तामकामयमानोऽसावनयर्चा प्रत्युवाच,—'आ घा ता गच्छान्'। 'घा'—इत्यनर्थक एव, 'आगच्छान्' आगमिष्यन्तीत्यर्थः। आह, कानि? उच्यते,—'ताः' "तानि उत्तराणि युगानि आगमिष्यन्ति" तेऽपि काला न तावत् साम्प्रतं वर्त्तन्ते इत्यभिप्रायः। येषु किम्? 'यत्र' येषु 'जामयः' भगिन्यः भ्रातॄणाम् "अजामि"—योग्यानि मैथुनसम्बन्धानि "कर्म्माणि" "करिष्यन्ति" कलियुगान्ते हि तादृशः सङ्करो भवति, न चेदं कलियुगं वर्त्तते इत्यभिप्रायः। यतो न तावदद्यापि सङ्कीर्णो वर्णसङ्करधर्मः सावारा एव तावत् प्रजाः। अतो ब्रवीमि,—'उप बर्बृहि' उपधेहि। कस्मै? 'वृषभाय' सर्वोपरि रेतःसेकुमन्यकुलजो योऽयः, तस्मै। किमुपबर्बृहि? इति 'बाहुम्'। शयनीये सर्वथा प्रार्थ्यमानोऽप्यहं तव पतिः न भविष्यामीति। यतो ब्रवीमि,—'अन्यमिच्छस्व' अन्यमन्वेषयस्व। हे 'सुभगे!' 'पतिं' 'मत्' मत्त इत्यर्थः॥ एतमेतस्मिन् मन्त्रे, सूक्ते वा संवादाधिकाराज्जामिशब्देन भगिन्युच्यते इत्युपपद्यते॥

"जामि"—इत्येतदेव स्वरान्तशब्दरूपम् "अतिरेकनाम" भवति, पुनरुक्तनामेत्यर्थः। तदुत्तरत्र लक्षणतो भविष्यति, "तद् यत् समान्यामृचि समानाभिव्याहारं भवति, तत् जामि भवति"—इति पुनरुक्ताभिधानत्वेन। जामिशब्दस्य पर्यैष्यो निगमः॥

"बालिशस्य वा" बालिशस्येतदेव नाम। बालिशो मूर्खः,

निग्रहाय समर्थः, येन परिपाल्यमाना एतं महीत्यभिप्रायः ॥ एवमेतस्मिन् मन्त्रे "यातवो देवाश्च मा आगच्छन्तु"—इति प्रतिषिद्धेष्वेतेषु 'स शर्द्धदर्य्यः'—इति

द्रवति, तस्येष्टत्वात्, स चाभ्यागतः सन्नवश्यं 'वि-मस्य" मनुष्यस्य निग्रहं करोति, तस्मात् विषमस्येत्युपपद्यते। यदा तु ऋतशब्दस्य "सत्यं दथर्वचनं भवति तदाऽस्माकम् 'ऋतं' सत्यम्, मापकर्माणः 'मा अपिगुः'—इत्येवं योज्यम्। गमिस्तदा ज्ञानार्थः। एवमप्युपपद्यत इत्यतो —"सत्यं वा यज्ञं वा"—इति ॥ ३ (१९) ॥

आ घा ता गच्छानुत्तरा युगानि यत्र जामयः कृण-न्नजामि। उप बर्बृहि वृषभाय बाहुमन्यमिच्छस्व सुभगे पतिं मत् ॥ आगमिष्यन्ति तान्युत्तराणि युगानि यत्र जामयः करिष्यन्त्यजामिकर्माणि जाम्यतिरेकनाम बालिशस्य वासमानजातीयस्य वोपजन उपधेहि वृषभाय बाहुमन्य-मिच्छस्व सुभगे पतिं मदिति व्याख्यातम् ॥ ४ (२०)

"जामि (४६)"—इति। एतदनेकार्थम्' पुनरुक्तान्याख्यामिधेयानि।

क्रियते।: यथानेन

ता०—०मत्"—इति (ऋ० सं० ७, ६, ७, ५)। इयं यमी
ल यमं प्रार्थयाञ्चकार,—एहि मैथुनाय सङ्गच्छावहा इति,
ाकामयमानोऽसावनयर्वा प्रत्युवाच,—'आ घा ता गच्छान्'।
'—इत्यनर्थक एव, 'आगच्छान्' आगमिष्यन्तीत्यर्थः। आह,
नि ? उच्यते,—'ताः' "तानि उत्तराणि युगानि आगमिष्यन्ति"
पि काला न तावत् साम्प्रतं वर्त्तते इत्यभिप्रायः। येषु किम् ?
त्र' येषु 'जामयः' भगिन्यः भ्रातृणाम् "अजामि"—योग्यानि
पुनसम्बन्धानि "कर्माणि" "करिष्यन्ति" कलियुगान्ते हि
ङ्कशः सङ्करो भवति, न चेदं कलियुगं वर्त्तते इत्यभिप्रायः।
तो न तावदद्यापि सङ्कीर्णो वर्णसङ्करधर्मः स्वाचारा एव तावत्
जाः। अतो ब्रवीमि,—'उप बर्बृहि' उपधेहि। कस्मै ? 'वृषभाय'
योपरि रैतःसेक्तुमन्यकुलजो योग्यः, तस्मै। किमुपबर्बृहि ?
ति 'बाहुम्'। शयनीये सर्वथा प्रार्थ्यमानोऽप्यहं तव पतिः न
विष्यामीति। यतो ब्रवीमि,—'अन्यमिच्छस्व' अन्यमन्वेषयस्व।
'सुभगे !' 'पतिं' 'मत्' मत्त इत्यर्थः॥ एतमेतस्मिन् मन्त्रे, सूक्ते
संवादाधिकाराज्जामिशब्देन भगिन्युच्यते इत्युपपद्यते॥

"जामि"—इत्येतदेव स्वरान्तशब्दरूपम् "अतिरिक्तनाम"
भवति, पुनरुक्तनामेत्यर्थः। तदुत्तरत्र लक्षणतो भविष्यति, "तद्
त् समान्यामृचि समानाभिव्याहारं भवति, तत् जामि
भवति"—इति पुनरुक्ताभिधानत्वेन। जामिशब्दस्य पर्यंप्यो
निगमः॥

"वालिशस्य वा" वालिशस्यैतदेव नाम। वालिशो मूर्खः,

निग्रहाय समर्थः, येन परिपाल्यमाना एतं
महीत्यभिप्रायः ॥ एवमेतस्मिन् मन्त्रे "यातवो
देवाश्च मा आगच्छन्तु"—इति अति
'स शर्द्धर्य्यः'—इति

द्रवति, तस्येष्टत्वात्, स चाभ्यागतः सन्नचर्य
मस्य" मनुष्यस्य निग्रहं करोति, तस्मात्
वेपमस्येत्युपपद्यते। यदा तु ऋतशब्दस्य "सत्
दर्यवचनं भवति तदाऽस्माकम् 'ऋतं'
मापकर्माणः 'मा अपिगुः'—इत्येवं योज्यम्।
गमिस्तदा ज्ञानार्थः। एवमप्युपपद्यत
—"सत्यं वा यज्ञं वा"—इति ॥ ३ (१६) ॥

आ घा ता गच्छानुत्तरा युगानि यत्र जाम
न्नजामि। उप बर्बृहि वृषभाय
पतिं मत् ॥ आगमिष्यन्ति तान्युत्तराणि युग
जामयः

याममानजातीयस्य वोपजन उपधेहि
मिच्छस्व सुभगे पतिं मदिति व्याख्यातम् ॥ ४

"जामि (४६)"—इति। एतदनेकार्थम्। भगिनी,
पुनरुक्तव्याख्याभिधेयानि।
तिष्ठते। यथानेन तापद्रगिन्युच्यते,

०—०मत्"—इति (ऋ० सं० ७, ६, ७, ५)। इयं यमी
यमं प्रार्थयाञ्चकार,—यदि मैथुनाय सङ्गच्छावहा इति,
मयमानोऽसावनयर्चा प्रत्युवाच,—'आ घा ता गच्छान्'।
इत्यनर्थक एव, 'आगच्छान्' आगमिष्यन्तीत्यर्थः। आह,
उच्यते,—'ताः' "तानि उत्तराणि युगानि आगमिष्यन्ति"
काला न तावत् साम्प्रतं वर्त्तते इत्यभिप्रायः। येषु किम्?
षु 'जामयः' भगिन्यः भ्रातृणाम् "अजामि"—योग्यानि
ानन्धानि "कर्माणि" "करिष्यन्ति" कलियुगान्ते हि
सङ्करो भवति, न चेदं कलियुगं वर्त्तते इत्यभिप्रायः।
तावदद्यापि सङ्कीर्णो वर्णसङ्करधर्मः स्वाचारा एव तावत्
अतो ब्रवीमि,—'उप बर्बृहि' उपधेहि। कस्मै? 'वृषभाय'
रेतःसेक्तुमन्यकुलजो योग्यः, तस्मै। किमुपबर्बृहि?
मुम्'। शयनीये सर्वथा प्रार्थ्यमानोऽप्यहं तव पतिः न
मीति। यतो ब्रवीमि,—'अन्यमिच्छस्व' अन्यमन्वेषयस्व।
!' 'पतिं' 'मत्' मत्त इत्यर्थः॥ एतमेतस्मिन् मन्त्रे, सूक्ते
तद्विकाराज्जामिशब्देन भगिन्युच्यते इत्युपपद्यते॥
मि"—इत्येतदेव स्वरान्तरशब्दरूपम् "अतिरेकनाम"
नरुक्तनामेत्यर्थः। तदुत्तरत्र लक्षणतो भविष्यति, "तद्
ान्याभृचि समानाभिव्याहारं भवति, तत् जामि
-इति पुनरुक्ताभिधानत्वेन। जामिशब्दस्य पर्यायो

लिशस्य वा" बालिशस्यैतदेव नाम। बालिशो मूर्खः,

रप्पो दधात। रपो रिप्रमिति पापनामनी भवतः
नञ्च रोगाणां यावनञ्च भयानामथापि शंयुर्वार्हस्पत्य
ते। तच्छंयोरावृणीमहे गातुं यज्ञाय गातुं यज्ञपतय
पि निगमो भवति। गमनं यज्ञाय गमनं यज्ञपतये
१ (२१)॥

इति चतुर्थाध्यायस्य तृतीयः पादः ॥ ४, ३ ॥

"पिता (४७)"—इति। एतदनवगतम्। "पाता वा पाल-
ा वा"—इत्यवगमः। "द्यौर्मे पिता"—इति (ऋ० सं० २,
२०, ३)। इयमस्यवामीयं दीर्घतमस आर्षम्। तृतीयसवने
द्वे शस्यते। 'द्यौर्मे पिता' येयं द्यौः, उपरि स्थिता द्युलो-
क्षा, एव एव मम पिता। द्यौरहमित्येवं वैवाहिके कर्मणि
लोकभावेन पित्रा आत्मानमभिसम्पाद्यमानं दृष्ट्वैवमाह मन्त्र-
—'द्यौर्मे पिता'—इति। 'जनिता' जनयिता, उत्पादयिते-
र्थः। आह,—कथम्? उच्यते,—'नाभिरत्र' नहनमेव नाभिः,
त्र एतस्मिन् द्युलोकलक्षणे पितर्युदकदानेनानुग्रहीतरि सति
त्नानोत्पत्त्यनुग्रहक्रमेणैव शुक्रात्मनोत्पत्तिरुपपद्यते,—इत्येव-
मिसमीक्ष्योक्तम् 'द्यौर्मे पिता, जनिता, नाभिरत्र'—इति। 'बन्धुः
' अनुसम्बन्धकारणाद् बन्धुः मे 'माता पृथिवी महीयम्'—इति।
ातुर्भावेन पृथिवीत्वं सम्पाद्यमानं दृष्ट्वैवमाह,—'बन्धुर्मे माता
थिवी महीयम्'—इति। उदकं हि द्युलोकात् पतितम्, पार्थि-

येन धातुना सम्पृक्तम्, थोपधिभावमागम्य,
—इत्येतदपेक्ष्य सर्वभूतानां द्यावापृथिव्यौ मातापितरं
तत्र तत्र। तद्यथा,—"द्वे स्रुती अशृणवं पितॄणामहं
मर्त्यानाम्। ताभ्यामिदं विश्वमेजत् समेति यदन्तरा
मातरञ्च॥"—इति (ऋ० सं० ८, ४, १२, ५)।
तत्कृतस्य ह्युपकारस्याभावे सर्वतरौ
वेव भवतः। तस्मादुपपद्यते द्यावापृथिव्योर्मातृपितृभावः।
—किमेते द्यावापृथिव्यौ अन्यत् किञ्चिदनपेक्ष्यैव
मातृपितृभावं बिभृतः, उत अन्यदपि किञ्चिदपेक्षेते!
उच्यते,—अनयोः 'चम्वोः' द्यावापृथिव्योः 'उत्तानयोः' ऊ
ह्येनयोः अन्तरा च प्रतिधारणीयोऽन्तः प्राणः तत इति
द्यावापृथिव्यौ, प्राणेन हीमे वायुना सूत्रभूतेन विधृते
एतयोः द्यावापृथिव्योरुत्तानयोः य एषोऽन्तरिक्षाख्यः
मध्ये 'योनिः' 'अत्र' एतस्मिन्नवकाशदानोपकारप्रवृत्ते सति
"पर्जन्यः" द्युलोकाख्यः, द्यौरेव हि रसान् प्रार्जयति,
सैवात्र पर्जन्यशब्देन भाष्यकारेणोक्ता। 'दुहितुः' "पृथि
उपरि 'गर्भं' 'सर्वभूतगर्भोत्पत्तिहेतुभूतोदकम् 'आधात्' आद
ददातीत्यर्थः। अत्र पृथिव्येव दुहितृशब्देनोक्ता सा हि द्युलो
'दूरे निहिता' अथवा सा हि द्युलोकं 'दोग्धीति' दुहिता,—
द्युलोकात् पतितमुदकमुपजीवत्येषा दूरे निहिता, दोग्धि या।
द्यावापृथिवीभ्यामन्तरिक्षेण चावकाशदानेनानुगृह्यमाणान्येत
स्मदादीनि भूतान्युत्पद्यन्त इति एतदनेन मन्त्रेण मन्त्रद्रष्टा

अत्र मातृपितृसम्बन्धात् पितृशब्दः पितर्य्येवेत्युपपत्तिः।
ाता चायमेतदाशासनं मन्येत॥

ंयोः (४८)"—इति। एतदनवगतम्। पञ्चम्यन्तं वा
ं वा सत्। निगमश्चैषः,—"यद्विदः पितर ऊत्यर्वा-
ो हुव्या चकृवा जुषध्वम्। त आ गतावसा शन्तमेनाथा
ोरपो दधात॥"—इति (ऋ० सं० ७, ६, १७, ४)। न
जमानोऽर्थात्तस्माद् बृहस्पतिपुत्रादर्थमपेक्षते, किं कारणम्?
च हि ते विधातुं समर्थाः, न च बृहस्पतिपुत्रस्य शंयोः
तरः किञ्चिद्देयैः पितृभिः विधीयेतेति। एवं पञ्चम्यर्था-
षष्ठ्यर्थासम्भवञ्च पश्यन् भाष्यकारः, 'शंयोः'—इत्येकं
द्वितीयान्ते द्वे पदे चकार, 'शम्'—इति, 'योः'—इति च।
स्य "शमनम्" अर्थं निराह, योरित्यस्य "यावनम्"—इति।
तीयान्ते परिणामं कृत्वा अर्थं निराह,—तथाहि वाक्येन
यत इति। कस्य शमनं कस्य वा यावनम्? इति पुनः
योगे प्राप्ते "रोगानाम्" "भयानाम्" "च" इत्यध्याजहार
कारः। रोगशमनञ्च दधात, भययावनञ्च, शान्तरोगा यथा
प्रहीणसर्वभयाश्च, तथा कुरुतेत्यभिप्रायः। किमेतावदेव?
पते,—यदपि चान्यत् किञ्चित् 'अपरः' अपापम्, तदपि
भ्यमेव 'दधात' दत्तेत्यर्थः॥ एवमेतत् पदम् एकम्, अर्था-
राद् द्विधा प्रविभज्य भाष्यकारेण निरुक्तम्। इत्थमप्यर्था-
रे सति निर्वचनप्राप्तिरस्त्येव, तद्यथा उद्गीथशब्दे,—"प्राण
प्राणेन ह्युत्तिष्ठति, वाग् गीर्वाचो ह गिर इत्याचक्षतेऽन्न-

मयान्नेन हीदं सर्वं स्थितम् (छा० ब्रा० ३, ३)" तस्मादुपपद्यते। प्रथमान्तमेव सत् कस्माद् [illegible] विपरिणम्यते शंयुमिति? एवमपि न विरुध्यति, [illegible] कश्चिदर्थ उपपद्यते, तस्माद् युक्तमिति॥ "रपो रिप्रम्" अत्र रिप्रशब्दस्य रपःशब्देनार्थसामान्यात् तत्त्वमुक्तम्। 'रिप्रम्' अमेध्यम्, तच्छुध्यतीति ह विज्ञायते॥

"अथापि शंयुर्बार्हस्पत्य उच्यते" अपि शं, योः, पदद्वयेन शमनयाचने रोगभययोः उच्येते, द्वेधा प्रविभक्तेन [illegible] यथावस्थितेनैवाविभक्तेन बार्हस्पत्यो बृहस्पतेः पुत्र उ[illegible] तस्याप्येतदेव नामेत्यपिशब्दः। "तच्छंयोरावृणीमहे [illegible] यज्ञाय गातुं यज्ञपतये"—इति। "ओमानं शंयोर्ममकाय [illegible] (ऋ० सं० १, ३, ४, ६)" इति, "तच्छंयोः सुम्नमीमहे ([illegible] सं० १, ३, २६, ४)"—इति च निगमौ। इयं शक्वरी। शंयो[illegible] बृहस्पतिपुत्रस्यार्षम्। शंयोर्वाके विनियुक्ता। शंयोपल[illegible] मभिसम्पाद्य, अथवा शंयोः सकाशादिति केचिन्मन्यन्ते। [illegible] कर्मणा 'शंयोः' वाकाख्येन 'तत्' तदा आभिमुख्येन 'वृणीमहे' किं पुनस्तत्? 'गातुं यज्ञाय' "गमनम्" अस्मै "यज्ञाय" दे[illegible] प्रति, 'गातुं यज्ञपतये' "गमनं" चास्मै "यज्ञपतये" देवान् प्रति [illegible] किञ्च, 'दैवी स्वस्तिरस्तु नः' देवानुग्रहादस्माकं स्वस्तिरस्तु, [illegible] नो देवाः काञ्चिदापदमुत्पादयन्त्वित्यभिप्रायः। 'स्वस्ति म[illegible] भ्यः' मनुष्येभ्योऽपि सकाशात् मा नः काचिदापदस्तु। 'ऊर्ध्व[illegible] [illegible] भेषजम्' गच्छत्वेतद्भेषजम् भयसादयितृ कर्म, यावद[illegible]

मनवच्छिन्नमविगुणश्चोर्द्ध्वगमनयोग्यम् अस्माकमस्त्वित्यभिप्रायः। किञ्च, 'शन्नो अस्तु' शं सुखं नोऽस्माकं भवतु, 'द्विपदे' मनुष्यादिकाय 'चतुष्पदे' गवादिकाय च॥ 'शंयुः' बृहस्पतिपुत्रः—इति, एतस्मिन् मन्त्रे विशेषलिङ्गमस्ति, तदन्यस्मात् श्रुतिलिङ्गात् कुतश्चिदुपलभ्यमानाद्वा एतावदेव त्वेतस्मात् मन्त्रात् सिद्धम्,—एकमेवेदं पदमविभक्तम् निरुच्यते, पञ्चम्यन्तं वा षष्ठ्यन्तं वा, न यथा पूर्वस्मिन् मन्त्रार्थासम्भवाच्छंयुशब्दो विभक्त इति॥ ५ (२१)॥

इति निरुक्तवृत्तौ नवमस्याध्यायस्य (चतुर्थाध्यायस्य)
तृतीयः पादः॥ ४. ३॥

---

## चतुर्थ पादः॥

### अदितिरदीना देवमाता ॥ १ (२२)॥

"अदितिः (४६)"—इति। एतदनवगतम्। "अदीना"—इत्यवगमः। "देवमाता" अभिधेया, ऐतिहासिकपक्षेण, नैरुक्तपक्षेणपुनर्यान्येतस्यामविवक्ष्यमाणायां द्यौरित्येवमादीनि पदानि श्रूयन्ते एतान्येवादितिशब्दनोच्यन्ते॥ १ (२२)॥

अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः। विश्वेदेवा अदितिः पञ्चजना अदितिर्जातमदि-

तिर्जनित्वम् ॥ इत्यदितेर्विभूतिमाचष्ट
वा। यमेरिरे भृगवः। एरिर इतीर्तिरुपसृष्टोऽ
॥ २ (२३) ॥

"अदितिर्द्यौः० ०मदितिर्जनित्वम्" (ऋ० सं० १,६
५)। राहुगणस्य गोतमस्येयमार्षम्। तृतीयसवने स
ग्वेव, वैश्वदेवस्य शस्त्रस्य परिधानीयैषा। 'अदितिः' एव
माता 'द्यौः' 'अदितिः' अदितिरेव च 'अन्तरिक्षम्' 'अदितिः'
'माता' सर्वभूतनिर्मात्री, 'सः' एव च 'पिता' पालकः, 'सः'
हि 'पुत्रः' सैव हि परितुष्टा सती स्तोतारं पुरुणो बहुतः पाप
त्रायते, अथवा सैव निपृणाति, सर्वभूतानां यन्निर्वर्त्तव्यं दा
मित्यर्थः। येऽपि चैते 'विश्वेदेवाः' सर्वे देवाः एतेऽपि 'अदि
एव। 'पञ्चजनाः' गन्धर्वादयः 'अदितिः' एव। सर्वथापि
बहुना, यावदेतत् किञ्चित् 'जातं' च 'जनित्वं' च जनिष्यमाणं
सर्वमप्येतत् 'अदितिः' एव। एवमनेन मन्त्रेण मन्त्रदृक् "अदिते
र्विभूतिमाचष्टे" देवमातुस्तान् सर्वमप्युपपद्यत एव, माहाभाग्या
द्देवतायाः। तदुत्तरत्र वक्ष्यामः। एवमैतिहासिकपक्षेण, नैरुक्त
पक्षेण पुनः "एतानि" द्युलोकादीनि सर्वाणि "अदीनानि" अनु
पक्षीणानि इति योज्यम्, न ह्येषां क्षयोऽस्तीति ॥

"एरिरे (५०)"—इति। एतदनवगतम्। "आ ईरिरे"-
इत्यपगमः। "यमेरिरे भृगवो विश्ववेदसं नाभा पृथिव्या भुव
नस्य मज्मना अग्निं तं गीर्भिर्हिनुहि स्व आ दमे य एको वस्

णो न राजति॥"—इति (ऋ० सं० २, २, २, ४)। दीर्घ-
स इयमार्षम्। जगती। प्रातरनुवाकाश्विनयोराग्निमारुते
शस्यते। 'यम्' अग्निमाभिमुख्येन ईरितवन्तः, प्रेरितवन्तः,
पेतवन्त इति यावत्, आत्माभिप्रेतार्थसिद्धये 'भृगवः'।
वर्वेदसं' सर्ववेदसं, सर्वस्य वेत्तारं, सर्वधनं वा। क पुनः
रे'? 'नाभा' पृथिव्याः नाभौ अवस्थितम्, उत्तरवेदिमध्यग-
ः पृथिव्या वेद्या उपरि। केन पुनरेरिरे? 'भुवनस्य'
स्य 'मज्मना' मननीयेन वीर्य्येणान्नेन हविर्लक्षणेन। किं
? 'तमग्निं' हे यजमान! त्वमपि 'गीर्भिः' वाग्भिः स्तुति-
ाभिः आभिमुख्येन स्थित्वा 'हिनुहि' प्रेरय। तस्मिन् तस्मिन्
ा घर्त्तमानमग्निहोत्रादौ, यथा भृगवः ईरितवन्तः, तथा 'स्वे
व एव गृहे, मा कस्यचिदार्त्विज्येऽवस्थित इत्यभिप्रायः।
रणं पुनरग्निमाहिनुहि? 'य एको वस्वः' एक एव यो
धनस्य दाता। 'वरुणो न' वरुण इव, यथा वरुणः
न्तर्गतानां धनानाम् इष्टे, एवं यः सर्वस्यैव धनस्य 'राजति'
त्यर्थः। राजतिरैश्वर्य्यकर्मसु पठितः,—"क्षियति (३),
(४)"—इति। "एरिरे—इति" "ईर्त्तिः" अयं धातुर्गति-
—"ईर्त्ते (७१), जयति (८१)"—इति गतिकर्मसु पठितम्।
ायमाङोपसर्गेण "उपसृष्टोऽभ्यस्तः" च, पुनः पुनरीरित-
त्यर्थः॥ २ (२३)॥

उव स्मै नं वस्रमर्यि न तायुमनु क्रोशन्ति क्षितयो

भरेषु। नीचायमानं जसुरिं न श्येनं श्रवश्चाच्छा पशुमच्च यूथम्॥ अपि स्मैनं वस्त्रमथिमिव वस्त्रमाथिनं वस्त्रं वस्तेस्तायुरिति स्तेननाम संस्त्यानमस्मिन् पापकमिति नैरुक्तास्तस्यतेर्वा स्यादनुक्रोशन्ति क्षितयः संग्रामेषु। इति संग्रामनाम भरतेर्वा हरतेर्वा नीचायमानं नीचैरयमानं नीचैर्निचितं भवत्युच्चैरुचितं भवति जस्तमिव श्येनं श्येनः शंसनीयं गच्छति। श्रवश्चाच्छा पशुमच्च यूथम्। श्रवश्चापि पशुमच्च यूथं प्रशंसां च यूथं च धनं च यूथं चेति वा यूथं यौतेः समायुतं भवति। इन्धान एनं जरते स्वाधीः। गृणाति मन्दी मन्दतेः स्तुतिकर्मणः। प्रमन्दिने पितुमदर्चता वचः। प्रार्चत मन्दिने पितुमद्वचो गौर्व्याख्यातः॥ ३ (२४)॥

"जसुरिः (५१)"—इति। एतदनवगतम्। "जस्तम्"—इत्यवगमः। "उत स्मैनं"—इति निगमः (ऋ० सं० ३, ७, १८, ५)। वामदेवस्यार्षम्। त्रिष्टुप्। दधिक्रावणे सूक्ते। दधिक्रावा चेन्द्र एव, वायुर्वा मध्यस्थानत्वात्। 'उत स्मैनम्' अ मिन्द्रम् 'अनुक्रोशन्ति' आभिमुख्येन क्रन्दन्ति, आह्वय 'क्षितयः' मनुष्याः। क्व? 'भरेषु' संग्रामेषु। कथं पुनः

क्रन्दन्ति ? 'वस्त्रमथिं न' वस्त्रापहर्त्तारमिव 'तायुम्' यथा केचि-ज्जनाः कञ्चिद्वस्त्रापहर्त्तारं तायुं दृष्ट्वा कश्चिदन्यमात्मनस्त्राणार्थ-मभिक्रन्देयुः, एवमेतमिन्द्रम् अभिक्रन्दन्ति संग्रामेषु, परैरभ्यर्द्य-मानास्त्राणार्थमात्मनः। किञ्च, अपि चैनं तायुं 'नीचायमानं' नीचैर्गच्छन्तं 'जसुरिं न' जसुरिमिव, "जस्तमिव" "श्येनं" बद्धम्, स्नायुतन्तुना य एष याजिक इति प्रसिद्धो राज्ञाम्, स हि बद्धत्वा-दुत्पतितुमत्यर्थं न शक्नोति, नीचैरेव गच्छति, गत्वा च शशका-दीनि हिनस्ति सत्वानि। स यथा जनैरभिक्रन्द्यते, तथा चैन-मभिक्रन्दति। आह,—कमर्थमभिसन्धाय ? इति। उच्यते,—'श्रवश्च अच्छ' कीर्त्तिश्चाभिसन्धाय, कथं नाम श्रूयेमहि ? प्रशस्ये-महि जितमेभिरित्येतमर्थमभिसन्धाय। 'पशुमञ्च यूथम्' अनेक-पशुजातिसंयुक्तं पशुयूथमभिसन्धायैतदस्माकं स्यादित्येवमभिक्रन्द-तीत्येष समस्तार्थः॥

अथैकपदनिरुक्तम्। "वस्त्रं वस्तेः" आच्छादनार्थस्य (अदा० आ०), तद्ध्याच्छाद्यते। "तायुरिति"—एतत् "स्तेननाम" "संस्त्यानं" संहतम् "अस्मिन् पापकं" भवति "इति" एवं "नैरुक्ता" मन्यन्ते। "तस्यतेः वा स्यात्" क्षयार्थस्य (दि० प०), उपक्षीणो ह्यसौ भवति, अधार्मिकत्वात्, परलोकमनपेक्ष्य कल्पयति कर्माणि। क्षितयो मनुष्याः। "भर इति संग्रामनाम" म्रियन्ते तस्मिन् योद्धारः "हरतेः वा" ह्रियन्ते हि तस्मिन् जीवि-तानि, वसूनि च। "श्येनः शंसनीयं गच्छति" शीघ्रत्वात्। "यूथं यौतेः" तद्धि "समायुतं भवति" एकत्र मिश्रीभूतं स्त्रीपुरुष-

बालवृद्धैः पशुभिः ॥ एवमिह नीचायमानं श्येनमित्यनेन सम्बन्धाज्जगुरिवेद्ध इत्युपपद्यते न ह्यवद्धः श्येनो नीचैरयते।

"जरते (५२)"—इति । एतदनवगतम् । धातोरस्यार्थप्रवृत्तिरेवानवगमः । "दिवस्परि प्रथमं जज्ञे अग्निरस्मद् द्वितीयं परि जातवेदाः । तृतीयमप्सु नृमणा अजस्रमिन्धान एनं जरते स्वाधीः ॥"—इति (ऋ० सं० ७, ८, २८, १)। वत्सप्रिर्भालन्दनः, तस्येयमार्षम् । उक्थस्याग्नेरुपस्थाने विनियुक्ता। 'दिवस्परि' 'दिवः' द्युलोकादित्यर्थः । 'प्रथमम्' अयम् 'अग्निः' 'जज्ञे' आदित्यात्मना । 'द्वितीयम्' 'अस्मत् परि' अस्मदधि अस्मत्तो जायते, पार्थिवात्मना । 'तृतीयम्' 'अप्सु' अन्तरिक्षलोके वैद्युतात्मना जायते । "आपः"—इति ह्यन्तरिक्षनामसु पठितम्। नृणां मनुष्याणामितः 'नृमणाः' नृषु वा मनोऽस्य, स नृमणाः। योऽयमेक एव त्रिषु स्थानेषु जायते, तमेवङ्गुणयुक्तं 'स्वाधीः' शोभनधीः 'इन्धानः' 'अजस्रं' नित्यं 'जरते' स्तौति, यः, स एव 'स्वाधीः' सुप्रज्ञ इत्यर्थः । इन्धानो हि किमन्यत् स्तुतेः कुर्यात्। तस्मात् "जरते"—इत्यस्य शब्दस्य "गृणाति"—इत्यर्थ उपपद्यते ॥

"मन्दिने (५३)"—इति । एतदनवगतम् । "मन्दते" स्तुत्यर्थस्य । '...

तृतीयेऽहनि मरुत्वतीये शस्त्रे निविद्धानीयसूक्तस्य प्रथमैषा। हे स्तोतारः! 'प्रार्चत' प्रकर्षेणोच्चारयत, पूजयत। 'मन्दिने' मन्दनीयाय, स्तुत्याय, स्तुतिमते वा इन्द्राय। 'पितुमत्' अन्नसंयुक्तं 'वचः'। 'यः' इन्द्रः, किं करोति? कृष्णस्य मेघस्य गर्भभूता अपः 'निरहन्' नीचैरहन्, निरगमयदित्यर्थः। केन? 'ऋजिश्वना' ऋजुरेवावक्षिप्तो लक्ष्ये यः स्वनति गच्छति इति ऋजिश्वा वज्रः, तेन निरगमयत्। 'अवस्यवः' अवनमात्मनो रक्षणमिच्छन्तः, तर्पणं वा। योऽयमेवम्प्रभाव इन्द्रः, तमिमं 'वृषणं' वर्षितारम्, 'वज्रदक्षिणं, वज्रबाहुम्, 'मरुत्वन्तं' मरुत्सहितम्, 'सख्याय' सखिभावाय 'हवामहे' तासु तासु क्रियासु आह्वयामहे इत्यर्थः॥ एवमेतस्मिन् मन्त्रे "मन्दिने पितुमद्वचः प्रार्चत'—इत्येतस्माद्वाक्यसम्बन्धादिन्द्रविशेषणमेतदित्युपपद्यते॥

"गौः (५४)"—इति। एतदनेकार्थत्वादिह समाम्नातम्। न चैतदनेकार्थत्वं तथा पुरस्तात् "व्याख्यातम्" ॥ २ (२४) ॥

'अत्रा ह गोरमन्वत नाम त्वष्टुरपीच्यम्। इत्था चन्द्रमसो गृहे॥ अत्र ह गोः सममंसतादित्यरश्मयः स्वं नामापीच्यमपचितमपगतमपिहितमन्तर्हितं वामुत्र चन्द्रमसो गृहे। गातुर्व्याख्यातः (गातुं कृण्वन्नुषसो जनायेत्यपि निगमो भवति) दंसयः कर्माणि दंसयन्त्येनानि। कुत्साय मन्मन्नह्यश्च दंसय इत्यपि निगमो भवति। स तू ताव

ह्युक्तम्। अथवाऽयमन्योऽस्यार्द्धस्यार्थः,—हे उन्नेतः! प्रक्षाल्य, तं हरितवर्णं सोमममेन कलशेन। क! द्रोणकलशस्योपरि। यूयमपि च हे होतारः! आसिञ्च एनं सोमं 'वाशीभिः' "वाग्भिः" स्तुतिलक्षणाभिः 'तक्षत' रुत, यदस्यायज्ञियमपूतं, तत् स्तुतिभिः पूतीतेत्यभि 'अश्मन्मयीभिः' व्यापनसमर्थाभिरित्यर्थः। यूयमपि हे ध्वर्यवः! पूतमेतमुन्नातृभिः, सोमं 'परिष्वजध्वं' ग्रहेण, स्य च। 'कक्ष्याभिः' अङ्गुलीभिः, अङ्गुलिभिरेव हि पात्र सोमो गृह्यते। यदेव चेदं ग्रहणमेव एव तस्य परिष्व 'परिष्वज्य च गृहीत्वा एनं सोमम् 'उभे' हविर्द्धाने 'धुरौ' 'वह्निम्' इव, वोढारमिव, अनड्वाहं 'युनक्त' एनं सोमं सादं त्यर्थः। स हि सोमो हविर्द्धानधुरोः अधस्तात् खरे सादे एतस्मादेव चानुडुद्योजनदेशं प्रति सामान्याद्वह्निमिव युनक्ते लुप्तोपममुपपद्यते। अत्र "वाशीभिस्तक्षते"—इति लक्षणये अश्ममय्यो वाश्य एता ग्रावाख्या इति प्रथमस्यार्थस्योपपत्ति एतस्मिन्नर्थे 'आ तू षिञ्च'—इत्यासेकशब्दो गौणः, न हि सो ग्णाम् अनभिषुतानाम् आसेकोऽस्ति कठिनत्वात्, तस्माद्गौ मर्थे प्रक्षेपणमात्रमेव सिञ्चतेरर्थः। अथवा 'आसिञ्चत ह द्रोणपल्ये'—इत्यतोऽनन्तरं वाशी शब्दः श्रूयमाणो वाड्नाम त्वेनाप्युपपद्यते एव, सोमो हि द्रोणकलशस्योपरि आसिच्यमा वाग्भिः स्तूयते। एवमर्थद्वयमभिप्रेत्य उभयथा ... सम्,—"वाशीभिरश्ममयीभिरिति वा वाग्भिरिति वा"—इ

'अयमपीतरो हरिः" मर्कटः, "एतस्मादेव" इति, हरित-
वाद्धरिरुच्यते, "शिरीषकुसुमप्रख्याः केचित् पिङ्गलकप्रभाः,
ाः"—इति श्रूयन्ते रामायणे ॥

"विगुणस्य (४५)"—इति। एतदनवगतम्। "विषमस्य"—
गमः। "न यातव इन्द्र जूजुवुर्नो न वन्दना शविष्ठ वेद्याभिः।
र्द्धदर्य्यो विषुणस्य जन्तोर्मा शिश्नदेवा अपि गुर्ऋतं नः॥"—
(ऋ० सं० ५, ३, ३, ५)। वसिष्ठस्येयमार्षम्। त्रिष्टुप्।
यमानसूक्ते माध्यन्दिने सवने शस्यते। हे भगवन्! "इन्द्र!"
ः कुरु यथा 'न' इममस्मदीयं 'यातवः' यातयितारः, यज्ञविघ्न-
रिः, केचिदपि 'जूजुवुः' आगच्छेयुरित्यर्थः? किञ्च, हे 'शविष्ठ'
ष्ठ! य एते 'वन्दनाः' वन्दितारः, लाड(ट?)गौडादयः, जानपदीभि
भिः' आकृतिभिर्युक्ताः, किं ब्राह्मणाः एते स्युः, उतान्यजा-
ः केचिदिति? अथवा आवेदितव्याभिः प्रवृत्तिभिः युक्ताः न

बालवृद्धैः पशुभिः ॥ एवमिह नीचायमानं श्येनमित्यनेन सम्बन्धाज्जसुरिवेह इत्युपपद्यते न ह्यवद्धः श्येनो नीचैरयते।

"जरते (५२)"—इति। एतदनवगतम्। धातोरस्यार्थे प्रवृत्तिरेवानवगमः। "दिवस्परि प्रथमं जज्ञे अग्निरस्मद् द्वितीयं परि जातवेदाः। तृतीयमप्सु नृमणा अजस्रमिन्धान एनं जरते स्वाधीः॥"—इति (ऋ० सं० ७, ८, २८, १)। वत्सप्रिर्भालन्दनः, तस्येयमार्षम्। उक्थस्याग्नेरुपस्थाने विनियुक्ता। 'दिवस्परि' 'दिवः' द्युलोकादित्यर्थः। 'प्रथमम्' अयम् 'अग्नि' 'जज्ञे' आदित्यात्मना। 'द्वितीयम्' 'असत् परि' अस्मदधि, अस्मत्तो जायते, पार्थिवात्मना। 'तृतीयम्' 'अप्सु' अन्तरिक्षलोके वैद्युतात्मना जायते। "आपः"—इति ह्यन्तरिक्षनामसु पठितम्। नृणां मनस्यवस्थितः 'नृमणाः' नृषु वा मनोऽस्य, स नृमणाः योऽयमेक एव त्रिषु स्थानेषु जायते, तमेवङ्गुणयुक्तं 'स्वाधीः' शोभनधीः 'इन्धानः' 'अजस्रं' नित्यं 'जरते' स्तौति, यः, स एव 'स्वाधीः' सुप्रज्ञ इत्यर्थः। इन्धानो हि किमन्यत् स्तुतेः कुर्यात्? तस्मात् "जरते"—इत्यस्य शब्दस्य "गृणाति"—इत्यर्थ उपपद्यते।

"मन्दिने (५३)"—इति। एतदनवगतम्। "मन्दतेः" स्तुत्यर्थस्य। मन्दनीयः स्तुतिमान् चेत्यर्थप्रतीतिः। "मन्दति (१८), शंसति (२५)"—इति स्तुतिकर्मसु पठितम्। "प्रमन्दिने पितुमदर्चता वचो यः कृष्णगर्भा निरहन्नृजिश्वना। अवस्यवो वृषणं वज्रदक्षिणं मरुत्वन्तं सख्याय हवामहे॥"—(ऋ० सं० १, ७, १२, १)। कुत्सस्येयमार्षम्। छन्दोमेषु

तीये ऽहनि मरुत्वतीये शस्त्रे निविद्धानीयसूक्तस्य प्रथमैषा। स्तोतारः! 'प्रार्चत' प्रकर्षेणोच्चारयत, पूजयत। 'मन्दिने' मन्दनीयाय, स्तुत्याय, स्तुतिमते वा इन्द्राय। 'पितुमत्' अन्नसंयुक्तं 'वचः'। 'यः' इन्द्रः, किं करोति? कृपणस्य मेघस्य निभृता अपः 'निरहन्' नीचैरहन्, निरगमयदित्यर्थः। केन? 'ऋजिश्वना' ऋजुरेवाधक्षितो लक्ष्ये यः श्वनति गच्छति इति ऋजिश्वा वज्रः, तेन निरगमयत्। 'अवस्यवः' अवनमात्मनो रक्षणमिच्छन्तः, तर्पणं वा। योऽयमेवम्प्रभाव इन्द्रः, तमिमं 'वृषणं' वर्षितारम्, 'वज्रदक्षिणं' वज्रबाहुम्, 'मरुत्वन्तं' मरुत्सहितम्, 'सख्याय' सखिभावाय 'हवामहे' तासु तासु क्रियासु आह्वयामहे इत्यर्थः॥ एवमेतस्मिन् मन्त्रे "मन्दिने पितुमद्वचः प्रार्चत'—इत्येतस्माद्वाक्यसम्बन्धादिन्द्रविशेषणमेतदित्युपपद्यते॥

"गौः (५४)"—इति। एतदनेकार्थत्वादिह समाम्नातम्। यथा चैतदनेकार्थत्वं तथा पुरस्तात् "व्याख्यातम्"॥ ३ (२४)॥

'अत्रा॒ ह॒ गोर॑मन्वत॒ नाम॒ त्वष्टु॑रपी॒च्य॑म्। इ॒त्था च॒न्द्रम॑सो गृ॒हे॥ अत्र ह गोः सममंसतादित्यरश्मयः स्वं नामापीच्यमपचितमपगतमपिहितमन्तर्हितं वामुत्र चन्द्रमसो गृहे गातुर्व्याख्यातः जनाधेत्यपि

नैनमभोत्यंहतिः । सतुनार नैनमंहतिरश्नोत्यंहतिर
श्चांहुश्च हन्तेर्निरूढोपधाद् विपरीतात् । बृहस्पते च
इतियारम् । बृहस्पते यच्चातयसि देवपीयुं पीयतेर्हिंसाक
वियुते द्यावापृथिव्यौ वियवनात् । समान्या वियुते दू
अन्ते । समानं सम्मानमात्रं भवति मात्रा मानाद् दू
व्याख्यातमन्तोऽततेऽर्द्धगिति पृथग्भावस्य प्रवच
भवत्यथाप्यृभोत्यर्थे दृश्यते । ऋधगया ऋधगुताशमिष्ठाः
ऋध्नुवन्नयाक्षीर्ऋध्नुवन्नशमिष्ठा इति चास्या इति चास्येति
चोदात्तं प्रथमादेशेऽनुदात्तमन्वादेशे तीव्रार्थतरमुदात्तमल्पी
योऽर्थतरमनुदात्तम् अस्मा ऊ षु ण उप सातये भुवोऽहे
लमानो ररिवाँ अजाश्व (श्रवस्यतामजाश्व) ॥ अस्मै नः
सातयः उपभवाहेलमनोऽक्रुध्यन्नरिचाननातिरम्यस्तोऽजाश्वेति
पूषण माहाजाश्चाजा अजना अथानुदात्तम् । दीर्घायुरस्या
यः पतिर्जीवाति शरदः शतम् । दीर्घायुरस्या यः पतिर्जीवतु
स शरदः शतं शरच्छृता अस्यामोपधयो भवन्ति शीर्णा
आप इति वाऽस्येत्यस्या इत्येतेन व्याख्यातम् ॥४(२५)॥

यदुक्तम्,—"अथाप्यस्यैको रश्मिश्चन्द्रमसं प्रति दीप्यते,
०—० सोऽपि गौरित्युच्यते,—'अत्रा ह गोरमन्वतेति' तदुपरिष्टा

'ऋतम्' उदकमस्मिन्नस्तीति, एवमेनं 'मन्वानाः'। 'व्यदर्दिरुः' विदारितवन्तः 'यत्रं' येन काले काले। 'यत्र' मेघे विदारिते 'दशस्यन्' दशस्यन्ति 'उपसः' माध्यमिकाः एव पूजनार्थं बहुवचनम्। किं दशस्यन्? 'अपः' अहिनिवासिन्यः, मेघनिवासिनीरित्यर्थः। ताश्च 'रिणन्' आगच्छन्, पृथिवीलोकम्। तदेतत् सर्वमपि क्रियते। किं पुनरर्थमुद्दिश्य त एवं कुर्वन्ति? 'मन्मन्' मानाः, 'कुत्साय' पृथिवीं घ्नन्तो, छर्घावलाय, 'दंसयः' कर्माणि सफलानि कर्त्तुम्। अत्र 'दंसयः'—इत्येतेन "कर्माणि" उक्तानि। दासैः कर्मकरैः, 'दस्यन्ते' कर्मकरा दासा इति। बाहुल्याद् भाष्यकारेण नोदाहृतः॥

"तूताव (५७)"—इति। एतदनवगतम्। "तुताव"। गमः। "यस्मै त्वं सु यजसे स साधत्यनर्वा क्षेति दधते स्यम्। स तूताव नैनमश्नोत्यंहुतिरग्ने सख्ये मा रि ष्यं तव॥"—इति (ऋ० सं० १, ६, ३०, २)। कुत्स मार्षम्। महाव्रते आग्निमारुते शस्त्रे जातवेदस्ये सूक्ते शस्य हे भगवन्! 'अग्ने!' 'यस्मै' यजमानाय 'त्वम्' 'आ' 'यजसे' देवान्, होतृत्वेऽवस्थितः। 'सः' एव 'साधति' यत्यात्मनोऽभिप्रेतार्थम्। किञ्च, स एव 'अनर्वा' अप्रत्यृ अनाश्रितः कञ्चिदन्यम्, स्वेनैव महिमायुक्तः। 'क्षेति' निवसति युष्मदनुग्रहात्। स एव 'दधते' धारयते 'सुवीर्यं' शोभनम्

चैते 'स्वसारौ' भगिन्यौ, सहोत्पत्तित्वात्। 'युवतीभवन्ती' न्श्रीभवन्त्यौ, परस्परसम्भोगेन। 'आदु उ ब्रुवाते मिथु- नाम' इति। अथैवमेते 'वियुते' च सम्मिश्रीभूते च सत्यौ, पृथिव्यौ, ब्रुवाते इव, प्रथयत इव, स्तोस्तृणां 'नाम' नामानि, नः 'मिथुनानि' द्विवचनसम्बद्धानि स्तुतिनामभिः,—स्वधे पुरन्धी (२)"—इत्येवमादिभिरिति॥ एवमेतस्मिन् मन्त्रे ुते"—इत्यस्य पदस्य द्यावापृथिवीविशेषणत्वम्, द्यावा- वीशब्दश्चात्राध्याहार्य्यः, 'दूरे अन्ते'—इत्येवमादीनां तथो- त्तिदर्शनात्॥

"ऋधक् (६०)"—इति। अनेकार्थम्। "ऋधगिति पृथः वस्य प्रवचनं भवति" पृथक्त्वमेव पृथग्भावः, तस्येदं प्रवचनं ति, सोऽनेन प्रोच्यते इत्यर्थः। "यदिन्द्र दिवि पार्य्ये यदृ- यद्वा स्वे सदने यत्र वासि। अतो नो यज्ञमवसे नियुत्वान् ोषाः पाहि गिर्वणो मरुद्भिः॥"—(ऋ० सं० ४, ७, १२, ५)। द्राजस्येयमार्षम्। पृष्ठ्यस्य पञ्चमेऽहनि मरुत्वतीये निविद्धानीये शस्यते। हे भगवन्! 'इन्द्र!' 'यत्' यदि त्वं 'दिवि' ोके 'पार्य्ये' पारणीये स्थानेऽवस्थितः, 'यदृधक्' यदि ऋधक् गिव इत्यर्थः। 'यद्वा' यदि वा 'स्वे सदने' अन्तरिक्षलोकेऽव- तः। 'यत्र वासि' क्वचिदन्यत्रैव स्थानेऽवस्थितः, को हि वतो वेद, तव स्थानं यत्रासीति। किं बहुना, यत्र यत्रासि स्थितः, 'अतः' आगत्य 'यज्ञम्' 'अवसे' रक्षसि। 'नियुत्वान्' ुर्भूत्वा। अस्त्यमेवम्प्रभावः, त्वां तु ब्रवीमि,—हे 'गिर्वणः'

न यष्टा देवानाम्, तं 'चयसे' "चातयसि" नाशयसि। श्रद्दधानो यष्टा, तस्मै देवान् यजते अनुददासि वामम्, त्वमेवं करोषि, तस्मात् ते पापबुद्धयः त्वां सम्यक् न ... भिप्रायः। यो हि दुर्बुद्धिः देवपियारुः ... स्यात्? चातय एवासौ॥ तस्मात् 'चयसे'—इत्येष "चतयतिः" नाशने इत्येवमस्थापिते नाशनार्थो भवतीत्युप "चातयतिर्नाशने"—इति हि वक्ष्यति। लोकेऽपि च ... देशादुच्चातित इति। तस्मादुपपद्यते॥

"वियुते (५६)"—इत्येतदेकमेव समस्तयोर्द्वयोरपि ... पृथिव्योरभिधानम्। "वियवनात्"—इति निर्वचनम्। मिश्रणार्थः (अदा० प०) ... भवति, विमिश्रीभूते इत्यर्थः। "इमे वै सहास्तां ते ... व्यैतामिति ह विज्ञायते"। "समान्या वियुते दूरे अन्ते ध्रुवे पदे तस्थतुर्जागरूके। उत स्वसारा युवती भवन्ती आदु ... मिथुनानि नाम॥"—इति (ऋ० सं० ३, ३, २५, २)। विश्वे ... स्येयमार्षम्। वैश्वदेवे सूक्ते। 'समान्या' समान्यायेते ... पृथिव्यौ, समानपरिमाणे। 'वियुते' च विमिश्रीभूते। 'दूरे' ... च, न हि द्यावापृथिव्योरन्तोपऽवधिरस्ति। 'ध्रुवे पदे' सम... वचनम्, अन्तरिक्षविषयम्, ध्रुवं शाश्वतम्, एतस्मिन् पदे आ... भूते, अन्तरिक्षस्य ह्यवां मान्ति, अनिरुद्धावात्, तच्चैतद् द्यावापृथिव्योः प्रतिष्ठा, तस्मिन्नेते 'तस्थतुः' स्थितवत्यौ। ... 'जागरूके' जागरणशीले, स्वं स्वमधिकारं प्रति। ...

चैते 'स्वसारौ' भगिन्यौ, सहोत्पत्तित्वात्। 'युवतीभवन्ती' मिश्रीभवन्त्यौ, परस्परसंभोगेन। 'आदु त ब्रुधाते मिथु- नाम' इति। अथैवमेते 'वियुते' च सम्मिश्रीभूते च सत्यौ, वापृथिव्यौ, ब्रुवाते इव, प्रथयत इव, स्तोस्तृणां 'नाम' नामानि, नः 'मिथुनानि' द्विवचनसम्बद्धानि स्तुतिनामभिः,—स्वधे पुरन्धी (२)"—इत्येवमादिभिरिति॥ एवमेतस्मिन् मन्त्रे युते"—इत्यस्य पदस्य द्यावापृथिवीविशेषणत्वम्, द्यावा- वीशब्दश्चात्राध्याहार्य्यः, 'दूरे अन्ते'—इत्येवमादीनां तयो- त्तिदर्शनात्॥

"ऋधक् (६०)"—इति। अनेकार्थम्। "ऋधगिति पृथः वस्य प्रवचनं भवति" पृथक्त्वमेव पृथग्भावः, तस्येदं प्रवचनं ति, सोऽनेन प्रोच्यते इत्यर्थः। "यदिन्द्र दिवि पार्य्ये यद्- यद्वा स्वे सदने यत्र वासि। अतो नो यज्ञमवसे नियुत्वान् सोपाः पाहि गिर्वणो मरुद्भिः॥"—(ऋ० सं० ४, ७, १२, ५)। ग्राजस्यैतमार्षम्। पृष्ठ्यस्य पञ्चमेऽहनि मरुत्वतीये निविद्धानीये : शस्यते। हे भगवन्! 'इन्द्र!' 'यत्' यदि त्वं 'दिवि' लोके 'पार्य्ये' पारणीये स्थानेऽवस्थितः, 'यदृधक्' यदि ऋधक् गिव इत्यर्थः। 'यद्वा' यदि वा 'स्वे सदने' अन्तरिक्षलोकेऽव- स्तः। 'यत्र वासि' कचिदन्यत्रैव स्थानेऽवस्थितः, को हि यतो वेद, तव स्थानं यत्रासीति। किं बहुना, यत्र यत्रासि ऽवस्थितः, 'अतः' आगत्य 'यज्ञम्' 'अवसे' रक्षसि। 'नियुत्वान्' युर्भूत्वा। वस्त्वमेवम्प्रभावः, त्वां तु ब्रवीमि,—हे 'गिर्वणः'

गीर्भिः सम्मजित! स हि स्तुतीः सम्मजति, सम्भज्यते, 'सजोषाः' सहजोषणः सप्रीतिः, पिबैतं सोममसन्प्रत्तम्। एवमेके व्याचक्षते ॥

अपरे पुनर्य एवैष भाष्यकारेण निगमः पठितः,— गयाः"—इति, अत्रैवैतौ द्वावप्यर्थाविति मन्यन्ते, तथापि व्यामस्तस्यामेवर्चि "अथापि" अथमेयमृधगिति शब्दः "ऋध्नोत्यर्थे" अपि "दृश्यते"—"ऋधगया ऋधगुताशमिष्ठ" इत्यस्मिन् मन्त्र। "वयं हि त्वा प्रयति यज्ञे अस्मिन्नग्ने मनूणीमहीह। ऋधगया ऋधगुताशमिष्ठाः प्रजानन् यज्ञमुप विद्वान् स्वाहा ॥"—इति (य० वा० सं० ८, २०)। समिष्टयजु सौमिकेषु विनियुक्ता। तत्र चोक्तम्,—"एतौ विश्वामित्रो य रणी अपश्यत्"—इति। हे भगवन्! 'अग्ने!' 'यत्' प्रयो दिश्य 'अद्य' 'प्रयति' प्रोत्सर्पति एतस्मिन् 'यज्ञे' 'वयम्' 'म महि' घृतवन्तः 'होतारं' त्वाम्। "अग्निर्दैव्यो होता"— श्रूयते। किं पुनस्तत् प्रयोजनम्? इति। कथं नामाल्पमप्ययदा हुतं देवतातृप्तिसमर्थं यद्व कुर्यादशान्तमपि च यद् विगुणं य किञ्चित् तत्सम्यगेवत्वा समृद्धमेव कुर्यात्? इति, तद्योमयन यथाशास्त्रमेवाशार्कं त्वया कृतम्, अत इदानीं परिसमाप्ते सिन् यज्ञे प्रत्यभाष्यसे अस्माभिः,—'ऋधगयाः' त्वम्, अल्पम हुतम् अस्माभिः हविः, 'ऋधक्' एव आद्धमेव, देवतातृप्तिसमर्थं कुर्वन् 'अयाः' त्वं यागमकार्षीरित्यर्थः। किञ्च, 'ऋधगुता

ग्राः' अपि च यदपि किञ्चिद्विगुणम् अकार्ष्म, वयमेतस्मिन् यज्ञे, पि सर्वमेव समृद्धं सगुणमेव कुर्वन्, पापमस्य यज्ञस्य अश-ग्राः स्विष्टकृद्रूपेण शमितवानसि। यस्त्वमेतदकार्षीरस्माकमे-स्मन् यज्ञे, तं, त्वां ब्रवीमि,—एतदेव मयैतेषां कर्त्तव्यमित्येतत् द्वान् 'प्रजानन्' प्रकर्षेण जानन् अस्माकमात्मन उपरि भक्तिं : पुनः 'उपयाहि' उपागच्छ 'यज्ञम्'॥ एवं तावदेकेषाम् पृथगयाः, ऋधगुताशमिष्ठाः"—इत्येतौ द्वावपि "ऋधक्"शब्दौ ध्नोत्यर्थावेव। एतस्मिन्नर्थे, ऋधक्शब्दस्य पृथग्भावार्थत्वे दिन्द्र दिवि पार्ये यदृधक्"—इत्येतदुदाहरणम्। अन्ये मन्यन्ते,—"ऋधगयाः ऋधगुताशमिष्ठाः"—इत्येतयोरेव धक्शब्दयोः पूर्वः पृथग्भावार्थः, उत्तर ऋध्नोत्यर्थ इति। तदेत-पद्यते, मिथ्याप्यपि हवींषि हुतानि सन्ति, त्वमग्ने ऋधक् मेव कृत्वा ततो देवानयाक्षीर्न ते सम्मोहोऽस्तीत्यभिप्रायः। ऋधगुताशमिष्ठाः'—इत्येष यथाव्याख्यात एव। पूर्वस्त्वर्थः धीयान्, यत्र द्वावप्येतावृध्नोत्यर्थावेव,—"ऋधगयाः" "ऋध-ताशमिष्ठाः"—इति। किं कारणम्? "अथाप्यृध्नोत्यर्थे श्यते"—इति एवमुपत्यस्य भाष्यकारेण ततोऽयमुपात्तो निगमः, —"ऋधगया ऋधगुताशमिष्ठाः"—इति, एवञ्च निरुक्तम्—ऋध्नुवन्नयाक्षीर्ऋध्नुवन्नशमिष्ठाः"—इति। तस्मात् द्वावप्येता-ध्नोत्यर्थावित्येतदेव साधीयः॥

"अस्याः (६१)"—इति, "अस्य (६२)"—इति च। पदद्वयं स्त्रीपुंसविषयम्, स्वरकृतात् विशेषात् प्रधानाभिधायि वा भवति।

...गुणसाम्यर्थं। तस्य ...नां पत्नी। तस्मात् "ई... अस्या यः पतिः"—इति, ...राम् ॥

निगमप्रदानमुख्यर्थं,—"तत्र" "अस्या" हि "...." ... "ओषधयो भवन्ति"—इति, "शीर्णा भात इति वा" ... प्रसृतानि स्रोतांसि शरदि विशीर्यन्ते। "अस्य-इति" ... पदं पुंलिङ्गम् ... "अस्याः—इत्येतेन" [illegible] व्याख्यानम्" ॥ ४ (२५) ॥

अस्य वामस्य पलितस्य होतुस्तस्य भ्राता मध्यमो अस्त्यश्नः। तृतीयो भ्राता घृतपृष्ठो अस्यात्रापश्यं विश्पतिं सप्तपुत्रम् ॥ अस्य वामस्य वननीयस्य पलितस्य पालयि होतुर्ह्वातव्यस्य तस्य भ्राता मध्यमो अस्त्यशनो भ्राता भरतेर्हरतिकर्मणो हरते भागं भर्तव्यो भवतीति वा तृतीयो भ्राता घृतपृष्ठो अस्यायमग्निस्तत्रापश्यं सर्वस्य पातारं वा पालयितारं वा विश्पतिं सप्तपुत्रं सर्पणपुत्रमिति वा सप्त सृप्ता सङ्ख्या सप्तादित्यरश्मयइति वदन्ति ॥ ५ (२६) ॥

यदेवोक्तम् "उदात्तं प्रथमादेशे, अनुदात्तम् अन्वादेशे"—इति तदेवात्रापि लक्ष्यमित्यभिप्रायः। उदाहरणमात्रं प्रदर्श्यते,—"अस्य वामस्य ०—० सप्तपुत्रम्"। अस्यवामीयमेवेदं सूक्तम्। दीर्घतमस आर्षम्। तार्त्तीयसवने महाव्रते वैश्वदेवे शस्त्रे शस्यते। 'अस्य' सूर्यस्य 'वामस्य' "वननीयस्य" स्तुतिभिः, 'पलितस्य' "पाल-

तुः" अयं हि सर्वमेवेदं जगत् पालयति । 'होतुः' "ह्वातव्यस्य"
ह्वानार्हस्य । आह, तस्य किम्? इति । उच्यते,—योऽयमेवं
गणः आह,—तस्य' भ्राता' "भागहर्त्ता" "भर्त्तव्यो वा"
पेन, 'मध्यमः' मध्यमस्थानः 'अस्ति' विद्यते । कतमः?
ऽयम् 'अश्नः' "अशनः" व्यापनो वायुरित्यर्थः, स हि द्युलोका-
दित्येनोदकेन भ्रियते, हरति चोदकं द्युलोकात् । 'तृतीयः' 'अस्य'
योः 'भ्राता' हविर्भागहर्त्ता वा, ऐन्द्राग्ने हविषि संस्तुतौ वा,
पृष्ठः' घृतेन स्पृष्टः, आज्यस्पृष्टः, "अयम्" एव "अग्निः" पृथि-
स्थानः । 'सहस्रिणः' वायोः, सर्वेभ्योऽपि वायुः बलवान् ।
यथा सहस्रमस्य नियुतमश्वानामस्तीति सहस्री वायुः, "आ
नियुद्भिः शतिनीभिरध्वरं सहस्रिणीभिः"—इति (ऋ० सं० २,
२४, ३) । श्रूयते वायव्ये मन्त्रे । वायुः, आदित्यः, अग्निः,—
येवं परिसंख्याय वायोस्तृतीयोऽग्निर्भवति, वायुरपि च
तिरेव, "वायुना ज्योतिषा"—इति विज्ञायते । तत्रैतस्मिन्
या विभक्ते ज्योतिषि, प्रधानत्वेनैतमेवाहमपश्यमिति । 'विश्-
तिं' विश्वस्य सर्वस्य जगतः पालयितारम् । कतमम्? य
: 'सप्तपुत्रः' सूर्यस्तमेवाहमत्र प्रधानेनापश्यमित्येवमे-
स्मिन् मन्त्रे । सूर्यः प्रधानः, सूक्ते सूर्याधिकारात्, तस्मात्
स्य वामस्य'—इत्येषः "अस्य"—शब्द अन्तोदात्तः । वायुरप्र-
धानम्, तस्मात् 'तृतीयो भ्राता घृतपृष्ठः अस्य,—इत्येषः "अस्य"
-शब्दोऽनुदात्तः ॥ एवमेकस्मिन्नेवास्मिन् मन्त्रे उदात्तानुदात्ता-
ौ "अस्य"-शब्दौ प्रधानाप्रधानविषयावित्येकमेवोदाहरणम् ॥

आह,—'तृतीयो भ्राता घृतपृष्ठो अस्य'—इत्यनेन शब्देन सूर्य्य एव कस्मान्न सम्बध्यते ? अपि च "तृतीय" प्रकृतानुक्रमाविरोधेनैवमेव सुखतरा योजना भविष्यति। —'अस्य वामस्य'—इत्येतदन्तोदात्तं पदमितरदन्यत् भ्राता घृतपृष्ठः अस्य'—इति प्रधानरूपमेव सत् स्वरकृताद्विशेषादर्थकृतेनापि घायिना विशेषः प्रतीयते। आदित्यसंस्तवात् सूक्ते प्रधानः, प्रकृतादादित्यात् तस्माद्वायुविषयमेवेदम् अस्येति द्वि पदमनुदात्तं सम्पद्यते। अतः सुतरामुपपन्नं भवति प्रथमादेशेऽनुदात्तमन्वादेशे"—इत्यत्र प्रधानाप्रधानावुच्येते इति। अन्ये तु मन्यन्ते, प्रारम्भः, तत्र यद्वर्त्तते, तदुदात्तं भवति, लक्षणेन। तद्यथा,—"अ॒स्या ऊ॒ षु ण॒: (ऋ० सं० २, २, २, "अ॒स्य वा॒मस्य (ऋ० सं० २, ३, १४, १)"—इति। नाम, अन्यस्य पदस्य पश्चादादेशः, तत्र वर्त्तमानमनुदात्तं भव पदात् पदस्य निघातो भवतीति हि लक्षणविदोऽपि ब्रु तथानुदात्तत्वेनैव लक्षणेनाल्पीयोऽर्थतरमप्रधानार्थतरं भव तद्यथा,—"दी॒र्घायु॑रस्या॒ यः पति॑: (ऋ० सं० ८, ३, २७, ४) तृतीयो भ्राता घृतपृष्ठो अस्य (ऋ० सं० २, ३, १४, १)"—इति।

आह,—कथं सप्तपुत्र आदित्यः ? इति। उच्यते,—"स दाक्षायणादित्यः पुत्रः"—इत्येवमैतिहासिका मन्यन्ते। ब्राह्मणे "मृतमित्यण्डमपापयत, तस्मिन्नादित्यः सप्तम इन्द्र

इति ह विज्ञायते"। अथवा सप्तसंख्याका युक्ता अस्य रश्मयः पुत्राः, तेनासौ सप्तपुत्रः। अथवा नैव संख्याभिप्रायमेतत् सप्तपुत्र इति। आह,—कथं तर्हि? इति। उच्यते,—"सर्पणपुत्रमिति" एवम्, सर्पणा हि तस्य रश्मयो मुहूर्त्तमप्यनवस्थायिनो यस्य पुत्राः सोऽयं सप्तपुत्रः। "सप्त सृता संख्या" षड्भ्यः सकाशात्। एवं सप्तसंख्योपेताः, सर्पणक्रियायोग्या वा एत एव "आदित्यरश्मयः" आदित्यस्य पुत्राः "इति" मन्त्रविदः "वदन्ति" मन्यन्ते ॥५(२६)॥

सप्त युञ्जन्ति रथमेकचक्रमेको अश्वो वहति सप्तनामा।
त्रिनाभि चक्रमजरमनर्वं यत्रेमा विश्वा भुवनाधि तस्थुः ॥

सप्त युञ्जन्ति रथमेकचक्रमेकचारिणंचक्रं चकतेर्वा चरतेर्वा क्रामतेर्वैको अश्वो वहति सप्तनामादित्यः सप्तास्मै रश्मयो रसानभिसन्नामयन्ति सप्तैनमृषयः स्तुवन्तीति वेदमपीतरन्नामैतस्मादेवाभिसन्नामात् संवत्सरप्रधान उत्तरोऽर्द्धर्चस्त्रिनाभिचक्रं त्र्यृतुः संवत्सरो ग्रीष्मो वर्षा हेमन्त इति संवत्सरः संवसन्तेऽस्मिन् भूतानि ग्रीष्मो ग्रस्यन्तेऽस्मिन्रसा वर्षा वर्षत्यासु पर्जन्यो हेमन्तो हिमवान् हिमं पुनर्हन्तेर्वा हिनोतेर्वाजरमजरणधर्माणमनर्वमप्रत्यृतमन्यस्मिन् यत्रेमानि सर्वाणि भूतान्यभिसन्तिष्ठन्ते तं संवत्सरं सर्वमात्राभिः स्तौति पञ्चारे

चक्रे परिवर्त्तमान इति पञ्चर्तुतया पञ्चर्तवः संवत्सरस्येति च
ब्राह्मणं हेमन्तशिशिरयोः समासेन षळर आहुरर्पितमिति
षड्ऋतुतया अराः प्रत्यृता नाभौ षट् पुनः सहर्तेः। द्वादशारं
नहि तज्जराय। द्वादश प्रधयश्चक्रमेकमिति मासानां मास
मानात् प्रधिः प्रहितो भवति। तस्मिन् साकं त्रिशता न
शङ्कवोऽर्पिताः षष्टिर्न चलाचलासः। षष्टिश्च ह वै त्रीणि
च शतानि संवत्सरस्याहोरात्रा इति च ब्राह्मणं समासेन।
सप्त शतानि विंशतिश्च तस्थुः। सप्त च वै शतानि विंशतिश्च
संवत्सरस्याहोरात्रा इति च ब्राह्मणं विभागेन विभागेन॥६

इति चतुर्थाध्यायस्य चतुर्थः पादः ॥ ४, ४ ॥

यथा चायं सप्तभिः सर्पणैर्वा रश्मिभिर्युज्यते तथेयमपि
ऋगेतस्मिन्नेव सूक्ते "सप्त युञ्जन्ति ०—० अधि तस्थुः"—इति
( ऋ० सं० २, ३, १४, २ )। 'सप्त' सङ्ख्योपेताः सर्पणा वा
'युञ्जन्ति' योजयन्त्यात्मना रश्मयः 'रथं' रंहणमादित्यम्, अथ
न्नेव ह्यसावादित्यो रश्मिभिः युज्यते, रंहणश्चासौ मुहूर्त्तमप्यन
वस्थायित्वात्। 'एकचक्रम्' एक एव ह्यसावन्तरिक्षे चरति,
इतराणि ज्योतींषि नाशयत्येव स्वेन तेजसा प्रकाशेन। 'एकोऽ'
एवाश्वः, अशनो व्यापनः सर्वभूतानाम् 'वहति'
सप्तस्तुतिः, सप्तपुत्रः—इत्येवमाद्याः सप्त

सङ्ख्याकाः स्तुतयोऽस्य। अथवा "सप्तास्मै रश्मयो रसानभि-सन्नामयन्ति"—एतस्मिन् मण्डले, इति सप्तनामा। अथवा "सप्तैनमृषयः (नमन्ति) स्तुवन्ति इति" सप्तनामा। "इदमपीत-रत्" शब्दः "नाम" "एतस्मादेव"—"अभिसन्नामात्" तदपि समर्थं प्रत्याययितुं क्रियापदस्य वा गुणभावेनाभिमुख्येन सन्नमति। स एवंलक्षणः सप्तचारी व्यापनः सप्तनामा, सर्पणैः सप्तभिर्वा रश्मिभिर्युक्तो यदा वहति, उदयादारभ्य यावदस्तमिति, तदेवं वहन् निर्वर्त्तयन्तीति उच्यते,—"त्रिनाभिचक्रमजरमनर्वम्" 'त्रिनाभिसंयुक्तं कालचक्रम्, चकतधर्मि, चकनं चलनमुच्यते, चरणधर्मि, क्रमणधर्मि वा। 'अजरम्' "अजरणधर्माणम्" ; 'अनर्वम्' "अप्रत्यृतमन्यस्मिन्" अनाश्रितमित्यर्थः। 'त्रिनाभिचक्रं' "ऋतुः" हि "संवत्सरः"—"ग्रीष्मो वर्षा हेमन्त इति" अनेन ऋतुविभागेन एतद्वेयास्य त्रिनाभित्वमभिप्रेतम्। ऋतुभिर्हि संवत्सरो नह्यते सन्नह्यते इत्यर्थः। "संवत्सरप्रधान उत्तरोऽर्द्धर्चः" आदित्यप्रधानः। "संवत्सरः संवसन्त्यस्मिन्"—इति प्रसक्तानु-प्रसक्तम्, समस्तानि हि "भूतानि" एतस्मिन् संवसन्ति। मैथुना-भिप्रायो वा स्यात् संवासः ? "ग्रीष्मः, ग्रस्यन्तेऽस्मिन् रसाः" सूर्येण। "वर्षा, वर्षत्यासु पर्जन्यः" तदेतत् प्रत्यक्षमेव। "हेमन्तः, हिमवान्" तत्र हि बहु भवति हिमम्। "हिमं पुनर्हन्तेर्वा" तद्धि हस्त्योषधिवनस्पतीन् प्रकिरति, "हिनोतेर्वा" तर्पणार्थस्य, तेन हि पुष्यन्ति यवादयः, गमनार्थस्य वा हन्तेः, तद्धि गमयति क्षयं भूतानि। 'अजरं' तत् संवत्सरचक्रम् अजरणधर्मि, न हि संव-

त्सरस्य जरा नाम धर्मोऽस्ति। "अनर्वम्" च तत् "अप्रत्यृत" अप्रतिगतमनाश्रितमन्यत्र क्वचित्। आह, अत्र किम्? इति उच्यते,—"यत्र" यस्मिन् 'मा' "इमानि" 'विश्वा' "सर्वाणि" 'भुवना' "भूतानि" 'अधि' उपरि 'तस्थुः' "अभिसन्तिष्ठन्ते" आश्रितानि विनाशमुपयान्ति। विनाशोऽपि हि संस्थोच्यते, संस्थितः पिता ममेत्युक्ते मृत इति गम्यते। तदेवंलक्षणं 'त्रिनाभि' कालचक्रमजरम्, य आदित्योऽभि निर्वर्त्तयति, यच्चेदमभिनिर्वर्त्यते कालचक्रम्, तदेतदुभयमप्यहं स्तौमीत्येवमस्य मन्त्रस्य पूर्वोऽर्द्धर्च आदित्यप्रधानः, उत्तर संवत्सरप्रधानः॥

आह—कथं गम्यते सम्वत्सरप्रधान उत्तरोऽर्द्धर्चः इति, न संवत्सरग्रहणमत्रास्ति? उच्यते,—'त्रिनाभिचक्रम्'—इत्येतस्मा दनुसम्बन्धात्। आह,—एतदपि विशेषलिङ्गमत्र नास्त्येव, यत्र ऋतवो नाभिशब्देनोच्यन्ते इति? तस्मादेतदप्ययुक्तमेवेति। उच्यते,—य एष पूर्वस्मिन्नर्द्धर्चे प्रकृतेन सूर्येणाभिनिर्वर्त्यते संवत्सरः, अस्मिंश्च सर्वाण्येतानि भूतान्यभिसन्तिष्ठन्ते, "तम्" एवं "संवत्सरम्" उत्तरस्मिन्नर्द्धर्चे प्रकृत्य मन्त्रदृक् 'त्रिनाभिचक्रम्'—इत्येवमाद्याभिः "सर्वमात्राभिः" सर्वैः अवयवैः 'पञ्चारे चक्रे' 'षडरे' 'त्रीणि शतानि षष्टिश्च' 'सप्तशतानि विंशतिश्च'—इत्येवं प्रकारैः "स्तौति"। तस्मात् सूक्ते संवत्सरस्यावयवस्तुत्यभि दर्शनादिहापि त्रिनाभिशब्द ऋतुविषय इत्युपपद्यते। षण्णामृतूनां द्वौ द्वौ ऋतू समानस्वभावौ इत्यनेनाभिप्रायेण त्रित्वम्। अथैव

मुक्त्वा "तं संवत्सरं सर्वमात्राभिः स्तौति" अधुना यथैतं सर्वमात्राभिः स्तौति, तथोपपादयति,—"पञ्चारे चक्रे परिवर्त्तमाने तस्मिन्नातस्थुर्भुवनानि विश्वा। तस्य नाक्षस्तप्यते भूरिभारः सनादेव न शीर्य्यते स नाभिः॥"—इति (ऋ० सं० २, ३, १६, ३—१, २२, ८, १३)। "इति पञ्चर्त्तुतया" संवत्सरस्य स्तुतिः। 'पञ्चारे चक्रे' ऋतवः अत्र अरत्वेनाभिप्रेताः। 'परिवर्त्तमाने' परिगृह्येदं जगद् वर्त्तमाने। आह,—किम्? इति। उच्यते, 'तस्मिन्नातस्थुः' तस्मिन्नवस्थितानि उपरि अधिरूढ़ानि। कानि? 'भुवनानि' भूतानि 'विश्वा' विश्वानि, सर्वाणि, कालचक्रे हि सर्वमेवेदं जगदधिरूढ़ं बम्भ्रमीति। अथैवमतिमहतापि सर्वभूतचक्रेणाक्रान्तस्य कालचक्रस्य 'भूरिभारः' बहुभारः सन्नेवायम् 'अक्षः' संवत्सराख्यः 'न तप्यते' न सन्तापयति नापि सन्तापं यास्यतीत्यर्थः। अपि च 'सनादेव' चिरन्तन एव सोऽक्षः, तथापि न तप्यते, न वा तप्तोऽपि सन् सहसैव 'विशीर्य्यते' नश्यति। आह,—यद्यक्षो न तप्यते शीर्य्यते वा, किमेवमतिचलीयसाक्षेण घृष्यमाणा नाभिः, तप्यते शीर्य्यते वा? इति। नेत्युच्यते,—'स नाभिः' अक्षो न शीर्य्यते न तप्यते। नाभिरादित्य एवाभिप्रेतः। आह,—कथमेतद्गम्यते 'पञ्चारे चक्रे'—इत्यत्र अरशब्देन ऋतवोऽभिप्रेता इति, न ह्यत्र विशेषलिङ्गमृतुनामरत्वेऽस्ति, अपि च ऋतवः षट् प्रसिद्धाः, इह च पञ्चार इति श्रूयते, तस्मादनुपपन्नम्? इति। उच्यते,—सूक्ते संवत्सरस्यावयवस्तुतिप्रायदर्शनादुपपद्यते। "पञ्चर्त्तवः संवत्सरस्येति च ब्राह्मणम्,

हेमन्तशिशिरयोः समासेन" एकत्वेनेत्यर्थः। तत्रानुपपद्यते। पञ्चर्त्तुत्वमृतूनाम्, अरत्वं चावयवस्तुत्यमित्सम्पन्नाद्विति॥

पञ्चपादं पितरं द्वादशाकृतिं दिव आहुः परे अर्धे पुरीषिणम्। अथेमे अन्य उपरे विचक्षणं सप्तचक्रे षळर आहुरर्पितम्"—(ऋ० सं० २, ३, १६, १)। "षळर आहुरर्पितमिति षड्ऋतुत्वा संवत्सरस्य स्तुतिः। 'पञ्चपादं संवत्सरम्, ऋतवो हि संवत्सरस्य पादाः, तैरयसौ पतति गच्छति। 'पितरं' पालकं सर्वभूतानामुत्पादयितारं वा 'द्वादशाकृतिम्' द्वादशमासप्रविभक्तविग्रहं "द्वादशमासाः संवत्सरस्य"—इति च ब्राह्मणम् "दिवे' 'परे' परमे 'अर्धे' स्थाने योऽयमवस्थित आदित्यः, एतस्मिन् पञ्चपादं पितरं द्वादशाकृतिं 'पुरीषिणं' उदकवन्तं संवत्सरम् 'अर्पितमाहुः' अविशेषेणान्ये ब्राह्मणाः। तस्मात् सर्वसंवत् वृष्टिमन्त इति ह विज्ञायते। तस्मात् संवत्सरस्योदकवत्त्वम् उपपद्यते। 'अथ' पुनः 'इमे' 'अन्ये' य एते 'उपरे' उपर्यवस्थिताः 'सप्त' ऋषयः, एते 'विचक्षणं' विविधानां सर्वभूतकर्मणां द्रष्टारमादित्यं 'चक्रे षडरे' तस्मिन् संवत्सराख्ये 'अर्पितमाहुः'। अथवा सप्तचक्र आदित्यः, स हि सप्तभीरश्मिभिश्चक्रते दीप्यते, 'सप्तचक्रे'—इत्येकं पदं तस्मादेवमपि भवति॥ एवमेके संवत्सरमादित्यप्रविष्टमाहुः,अपरे पुनरादित्यं संवत्सरेप्रविष्टमित्येष सर्वस्तार्थः॥ परमेतस्यामृचि आदित्यसंवत्सरौ स्तूयेते। अस्यां हि "चन्द्रमसा वायुना संवत्सरेणेति संस्तवः"। संवत्सरस्य ...रूपेण नाभ्यादिभिः स्तुतिरुपपद्यते॥ "अराः प्रत्यृता नाभौ"

तिगता इत्यर्थः। "षट् पुनः सहते" ते हि पञ्चसङ्ख्यामभि-मूय वर्त्तन्ते॥

"द्वादशारं न हि तज्जराय"—इति। "द्वादशप्रधयश्चक्रमे-कम्"—इति। "इति मासानाम्" एतौ पादौ भवत इति वाक्य-शेषः। "द्वादश प्रधयश्चक्रमेकं त्रीणि नभ्यानि क उ तच्चिकेत। तस्मिन् साकं त्रिशता न शङ्कवोऽर्पिताः षष्टिर्न चलाचलासः॥" —इति (ऋ० सं० २, ३, २३, २)। "मासा मानात्" मीयते हि तैः संवत्सरः। "प्रधिः प्रहितः" प्रश्लिष्य चक्रे निहितः "भवति" गण्डपुच्छः प्रधिरित्युच्यते। 'द्वादशप्रधयः' मासाख्याः, संहताः सन्तः 'चक्रमेकं' भवति। तत्र च पुनः 'त्रीणि नभ्यानि' फलकानि भवन्ति,—त्रय ऋतवो ग्रीष्मो वर्षा हेमन्त इति। यदेतदेवंलक्षणं चक्रम् 'क उ तत् चिकेत' कस्तु तत् याथार्थ्यतो विजानाति? 'तस्मिन्' चक्रे 'साकं' सह 'त्रिशता न शङ्कवोऽ-र्पिताः' त्रिशतान्यहोरात्राणि शङ्कव इवार्पितानि। 'षष्टिर्न' षष्ट्यधिकानि त्रीण्यहोरात्रशतानि शङ्कव इवार्पितानि, प्रक्षि-प्तानि। द्वितीयो नकारः समुच्चयार्थे। 'चलाचलासः' चलानि च अचलानि च, चलान्यनवस्थायित्वात्, अचलान्यहोरात्रात्म-भावं न मुञ्चति। आह,—कथं गम्यते अहोरात्राण्येतानीति? उच्यते,—संवत्सरस्तुतिप्रायसम्बन्धात्। "षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्याहोरात्रा इति च ब्राह्मणं समासेन" अहो-रात्रयोरैकत्वेनेत्यर्थः॥

"द्वादशारं न हि तज्जराय वर्वर्त्ति चक्रं परि द्यामृतस्य। आ

पुत्रा अग्ने मिथुनासो अत्र सप्त शतानि विंशतिश्च तस्थुः
इति ( ऋ० सं० २, ३, १६, १ )। 'न हि तज्जीर्यते' किं
अन्यानि भूतानि जरयत् 'पर्यत्ति' च पुनः पुनर्वर्तते। 'परि
परिगृह्य द्यावापृथिव्यौ च ततो वर्तते। 'ऋतस्य'
पूर्णम्, अथवा 'ऋतस्य' आदित्यस्य सम्भूतम्, अथवा
यज्ञस्याङ्गभूतम् 'आतस्थुः' पुत्राः। एतस्मिंश्चक्रे 'मिथुना'
इत्यर्थः। कस्य ? 'अग्ने'। अग्निशब्दोऽस्मिन् मन्त्रे
नान्तः, षष्ठ्या विपरिणम्यते, अग्नेः पुत्रा आतस्थुरिति।
अत्रादित्य एवाभिप्रेतः, तस्याहोरात्राण्येव पुत्रत्वेनोच्यन्ते,
कृतत्वादहोरात्राणाम्। आह,—कियन्तस्ते पुत्राः ?
उच्यते,—"सप्तशतानि विंशतिश्च"। ब्राह्मणमपि चैतस्मिन्
भवति,—"सप्त च वै शतानि विंशतिश्च
इति च ब्राह्मणमहोरात्रयोर्विभागेन विभागेन"—इति॥ एत
स्मिन् सूक्ते संवत्सरं "सर्वमात्राभिः" सर्वैरवयवैः "स्तौति"
तस्मादुपपद्यते "सप्त युञ्जन्ति"—इत्येतस्यामृचि संवत्सर
त्रिनाभिचक्रमित्येषोऽर्द्धर्चः। तदेतत् सर्वमपि 'सप्तपुत्रं' स
पुत्रमित्येतस्मात् पदात् प्रसक्तानुप्रसक्तमुक्तम्, प्रकृतमिदा
वर्णयिष्यामः। किं पुनः प्रकृतम् ? ऐकपदिकं समाम्नाय
ख्यानम्। तत्र यदुक्तं तदुक्तमेव, यदनुक्तं तद्वक्ष्यमितिदम
ष्यते,—"सप्तिमविन्दुच्चरणे नदीनाम्"—इति॥ ६ (२७)॥

इति निरुक्तवृत्तौ नवमाध्यायस्य [ चतुर्थाध्यायस्य ]
चतुर्थः पादः॥ ४, ४॥

ऋज्वर्थायां निरुक्तवृत्तौ जम्बूमार्गाश्रमवासिन
आचार्यभगवद्दुर्गस्य कृतौ नवमोऽध्यायः
(चतुर्थोऽध्यायः) समाप्तः ॥ ४ ॥

---

१   २   ३   ४   ५   ६
(एकार्थकानुवयःसुपर्णायदिन्द्रजुष्टोदसूनाः सम्मातप-
७   ८   ९ १०   ११   १२   १३
स्वीपिरेणमस्त्वोतितउसत्कृमिवततसूर्यस्येन्द्रेणसमीमान्ता-
१४   १५ - १६   १७   १८ १९ २०
सः कायमानःकनीनकेवोपोअदर्शिसुविते विद्यामदेवानआघा-
२१   २२ २३   २४ २५ २६   २७
ग्नौर्मेऽदितिरदितिरुतस्मात्राहास्यवामस्यसप्तयुञ्जन्ति सप्त-
विंशतिः ॥)

इति निरुक्ते पूर्वषट्के चतुर्थोऽध्यायः समाप्तः ॥ ४ ॥

# अथ पञ्चमाध्यायस्य

## प्रथमः पादः।

—:o@o:—

ॐ३म्। सन्निमविन्दच्चरणे नदीनाम्। ...
मेषम्। वाहिष्ठो वां हवानां स्तोमो दूतो ...
वोढ़तमो ह्वानानां स्तोमोदूतो हुवन्नरी ...
कर्मसु दूतो जवतेर्वा द्रवतेर्वा वारयतेर्वा (दूतो दे...
मर्त्यानामित्यपि निगमो भवति।) वावशानो ...
वाश्यतेर्वा। सप्त स्वसृररुषीर्वावशान इत्यपि नि...
भवति। वार्यं वृणोतेरथापि वरतमम्। तद्वार्यं ...
वरिष्ठं गोपयत्यम्। तद्वार्य्यं वृणामहे वरिष्ठं गोपायि...
गोपायितारः। यूयं स्थ युष्मभ्यमिति वान्ध इत्यन्ध...
ध्यानीयं भवति। आमत्रेभिः सिञ्चता मद्यमन्धः। ...
श्चतामत्रैर्मदनीयमन्धोऽमत्रं पात्रममा अस्मिन्नद...
पुनरनिर्मितं भवति पात्रं पानात्तमोऽप्यन्ध उच्यते नाऽ...
स्थानं भवति न दर्शनमन्धन्तम इत्यभिभापन्तेऽयमपीत...
एतस्मादेव। पश्यदक्षण्वान् न विचेतदन्ध इत्यपि नि...
...ति ॥ १ ॥

"सस्निम् (१)"—इति। एतदनवगम्। अर्थाप्रतीतिरस्य-
गम्य इत्युच्यते। लक्षणासम्पन्नश्च संस्कारः सत्यपि अविज्ञा-
त्युच्यते। तत्रैवं सति, कश्चित्प्रकृत्यादेः संस्कारस्यानवगमः,
वेदर्थाप्रतीतिरेव, कश्चिदुभयस्याप्यनवगमः, यथास्मिन्नेव सस्नि-
ति न विज्ञायते किमप्युक्तं भवति? प्रकरणादत्र मेघाभिप्रेयम्,
यत्रान्योऽपि कश्चित् स्यात्, प्रकरणविशेषादेव। एवं सर्वत्रै-
वेक्षितव्यम्। प्रकरणसामर्थ्याच्छब्दोऽप्यर्थान्तरं भजते।
स्निमविन्दच्चरणे नदीनामपावृणोद्दुरो अश्मव्रजानाम्। प्रासां
ग्धर्वो अमृतानि वोचदिन्द्रो दक्षं परिजानादहीनाम्॥"—इति
ऋ० सं० ८, ७, २७, ६)। विश्वावसोर्देवगन्धर्वस्येयमार्षम्।
ोत्सादने विनियुक्ता। तत्रोक्तं परिधिके गन्धर्वनामभिरुपति-
तमृत्विजो यजमानश्चेति। तासामुपस्थानर्चामियं मध्ये मैत्राव-
यिके। 'सस्नि' "संस्नातम्" अद्भिः परिवेष्टितं, सर्वतः परिसुतं,
तं वा "मेघम्" 'अविन्दत्' अलभतेन्द्रः। क्व पुनरलभत?
रणे नदीनां' यत्र नद्यः आपश्चरन्ति, गच्छन्ति, तत्रालभत,
न्तरिक्षलोके इत्यर्थः। आह,—लब्ध्वानन्तरं किमकरोत्?
ते। उच्यते,—'अपावृणोत्' अपावृतवान्, उद्घाटितवानि-
र्थः। 'दुरः' द्वारः। आह,—कस्य? उच्यते,—'अश्मव्रजा-
म्' अपामस्मा मेघः, तमधि या व्रजति, स च यासां व्रजभूतो
ऽऽश्रयभूतः, ता अश्मव्रजा आपः, तासां निर्गमनद्वाराणि अपावृ-
णोत्। या एता एवंलक्षणा आप', 'आसाम्' अस्य च इन्द्रस्य
न्धर्वः' विश्वावसुः 'प्रावोचत्'-'अमृतानि' नामानि, छान्दसत्त्-

तियुक्तानि, तानि हि नित्यत्वादमृतानि। आह, स्येन्द्रस्यामृतानि प्रावोचदसावित्राणाम्? इति। उच्यते, यस्मादसाविन्द्रः 'दक्षं' दातारं मेघम्। अयम् आसाम् अयमानाम्, अपां द्वारेषु अपावृतेषु, दानाय ... इत्येवं 'परिजानात्' परिज्ञातवान्। परिज्ञाय च ... दस्मव्रजानाम्'। तस्मादस्येन्द्रस्यामृतानि नामानि प्रावो... ध्यानेन प्रकारेणेन्द्रेण सर्वमेवेदं जगद् ध्रियत इति ... हेतुना प्रावोचदिति। एवमेतस्मिन् मन्त्रे 'चरणे ... न्दत्' अपावृणोद्य दुरोऽस्मव्रजानाम्, दक्षञ्च परिजानात्' कथावयतार्थसम्बन्धात् "सखि"शब्दो मेघविशेषणम् उपपद्...

अथवा अयमप्यस्य मन्त्रस्य पादव्यत्ययेनार्थः स्या... संस्नातं मेघमविन्ददलभतेन्द्रः पर्येष्यमाणः, क्वाविन्द...? नदीनाम्, अपाम्, अन्तरिक्षलोके। लब्ध्वा च स एव ... मेघं, दक्षं दातारम्, अहीनाम् अपां परिजानात्। परि... समर्थोऽयमिति ततस्तस्य द्वाराण्यपावृणोत्। ... पामधो निर्गमनाय। तत एतानि निर्गतानि, अमृतानि ... शस्यसम्पत्कराणि प्रावोचदिव प्राकथयदिव,—अस्... गन्धर्वः, आसां प्रजानां जीवध्वमेभिरुदकैरस्मद्दत्तै रति। गन्धर्वः, तस्य मरुतोऽप्सरसः"—इति श्रूयते। तस्मादिव गन्धर्वत्वमुपपद्यत एव, स च गोः पञ्चस्य धारयिता इति ...

"वाहिष्ठः (२)"—इति। एतदनवगतम्। "वाहिष्ठ... इत्यपगमः। "वाहिष्ठो वां हवानां सोमो दूतो हुवन्नरा। यु...

मृत्त्वश्विना ॥"—इति (ऋ० सं० ६, २, २६, १)। गायत्री। वेदधमनसो वैयश्वस्येयमार्षम्, पितुर्वा व्यश्वस्य। प्रातरनुवाकाश्विनयोः शस्यते। 'नरा' हे नरौ! सर्वेषामेव योद्धॄणां स्तोतॄणाम्, आह्वातॄणाञ्च। य एष एषः 'वाहिष्ठः' अतिशयेन वोढा, आह्वातृतमः, अयमेव 'दूतः' इव युवां 'हुवन्' आह्वयदित्यर्थः। योऽयमेवंलक्षणः 'सोमः' अस्मत्प्रेरितः, स नित्यकालमेव 'युवाभ्यां' 'भूतु' भवत्वित्यर्थः। हे 'अश्विना' अश्विनौ! इति सम्बोधनम्। 'स्तोमो दूतः'—इत्येताभ्यां समानविभक्त्यन्तत्वात् "वाहिष्ठ"-शब्दः सोमविशेषणमित्यवगम्यते ॥

निगमप्रसक्तमित्युच्यते,—"मनुष्याः" अपि हि "नराः" उच्यन्ते, ते हि "नृत्यन्ति" गात्राणि पुनः पुनः प्रक्षिपन्ति "कर्मसु" उपस्थितेषु तान्यनुतिष्ठमानाः ॥

"दूतो" (३) जवतेर्वा गत्यर्थस्य" स हि गच्छति। "द्रवतेर्वा" गत्यर्थस्यैव। "वारयतेर्वा" स हि वारयत्यनर्थान् ॥

"वावशानः (४)"—इति अनवगतम्। "वष्टेर्वा" कान्त्यर्थस्य, "वाश्यतेर्वा" शब्दार्थस्य वावशानः स्यात्। "सन स्वसूरर्णीर्णावशानो विद्वानस्य उत्त्रभारा दूतो यन्। अन्तर्येमे अन्तरिक्षे पुराजा इच्छन् वव्रिमविदत् पूषणस्य।"—इति (ऋ० सं० ७, ५, ३२, ५)। वितस्यास्येयमार्षम्। आग्नेयी। त्रिष्टुप्। प्रातरनुवाकाश्विनयोः शस्यते। 'सस' 'स्वसृः' स्वसारो भगिन्य इव पार्थिवः समानजन्मरणात्। अथवा सह सरणात् स्वसारः,

वियुक्तानि, तानि हि नित्यत्वादमृतानि। आह,—क
स्येन्द्रस्यामृतानि प्रावोचदासाञ्चापाम्? इति। उच्य
यस्मादसाविन्द्रः 'दक्षं' दातारं मेघम्। अयम् आसाम्
अयनानाम्, अपां द्वारेषु अपावृतेषु, दानाय समर्थो भवि
इत्येवं 'परिजानात्' परिज्ञातवान्। परिज्ञाय च 'अपावृणोत्
श्मव्रजानाम्'। तस्मादस्येन्द्रस्यामृतानि नामानि प्राव
अनेन प्रकारेणेन्द्रेण सर्वमेवेदं जगद् भ्रियत इति आसाम
हेतुना प्रावोचदिति। एवमेतस्मिन् मन्त्रे 'चरणे नदीनाम्
न्दत्' अपावृणोच्च दुरोऽश्मव्रजानाम्, दक्षञ्च परिजानात्'—
कवाक्यतार्थसम्बन्धात् "सखि"शब्दो मेघविशेषणम् उपपद्य

अथवा अयमप्यस्य मन्त्रस्य पादव्यत्ययेनार्थः स्यात्
संस्नातं मेघमविन्ददलभतेन्द्रः पर्येष्यमाणः, काविन्दत्? क
नदीनाम्, अपाम्, अन्तरिक्षलोके। लब्ध्वा च स एव त
मेघं, दक्षं दातारम्, अहीनाम् अपां परिजानात्। परिज्ञा
मार्गोऽयमिति ततस्तस्य द्वाराण्यपावृणोत्। अश्मव्रजान

त्वश्विना ॥"—इति ( ऋ० सं० ६, २, २१, १ )। गायत्री। इयमनसो वैयश्वस्येयमार्षम्, पितुर्वा व्यश्वस्य। प्रातरनुवाकाश्विनयोः शस्यते। 'नरा' हे नरौ! सर्वेषामेव वोढ़णां तोमानाम्, आह्वातृणाञ्च। य एव एषः 'वाहिष्ठः' अतिशयेन ढा, आह्वातृतमः, अयमेव 'दूतः' इव युवां 'हुवत्' आह्वयदित्यर्थः। योऽयमेवंलक्षणः 'सोमः' अस्मत्प्रेरितः, स नित्यकालमेव 'युवाभ्यां' 'भूतु' भवत्वित्यर्थः। हे 'अश्विना' अश्विनौ! इति सम्बोधनम्। 'स्तोमो दूतः'—इत्येताभ्यां समानविभक्त्यन्तत्वात् "वाहिष्ठ"-शब्दः सोमविशेषणमित्युपपद्यते ॥

निगमप्रसक्तमित्युच्यते,—"मनुष्याः" अपि हि "नराः" उच्यन्ते, ते हि "नृत्यन्ति" गात्राणि पुनः पुनः प्रक्षिपन्ति "कर्मसु" उपस्थितेषु तान्यनुतिष्ठमानाः ॥

"दूतो" (३) जवतेर्वा गत्यर्थस्य" स हि गच्छति। "द्रवतेर्वा" गत्यर्थस्यैव। "वारयतेर्वा" स हि वारयत्यनर्थान् ॥

"वावशानः (४)"—इति अनवगतम्। "वष्टेर्वा" कान्त्यर्थस्य, "वाश्यतेर्वा" शब्दार्थस्य वावशानः स्यात्। "सस्र स्वसृररीर्वावशानो विद्वानमध्य उज्जभारा दृशो कम्। अन्तर्यमे अन्तरिक्षे पुराजा इच्छन् वव्रिमविदत् पूरणस्य।"—इति ( ऋ० सं० ७, ५, ३३, ५ )। त्रितस्याप्तस्येयमार्षम्। आग्नेयी। त्रिष्टुप्। प्रातरनुवाकाश्विनयोः शस्यते। 'सस्र' 'स्वसृः' ससारो भगिन्य इव पार्श्वचिः समानजन्मत्वात्। अथवा सह सर्पणात् ससारः,

यूयं भविष्यथ, तद् वृणीमहे। अथवा युष्मभ्यं यौष्माकीणं यद्भवति, तद् वृणीमहे। किञ्च, नित्यकालमेव मित्रावरुणाभ्यर्यमाणः 'यत्' 'पान्ति' रक्षन्तीत्यर्थः, तद् वृणीमहे। एवमत्र च मित्रावरुणार्य्यमाणो यत् पान्ति इत्यनेन सम्बन्धात् "धार्य्य"—शब्दो धनविशेषणमित्युपपद्यते॥

"अन्धः (१६)"—इति। अनेकार्थमनवगतम्। आध्यानीयमित्यर्थप्रतीतिः। प्रार्थनीयमन्नं भवति सर्वस्यैव। "अध्वर्य्यवो भरतेन्द्राय सोममामत्रेभिः सिञ्चता मद्यमन्धः। कामी हि वीरः सदमस्य पीतिं जुहोत वृष्णे तदिदेष वष्टि॥"—इति (ऋ० सं० २, ६, १३, १)। गृत्समदस्येयमार्षम्। रात्रिपर्य्याये शस्यते। होतुः शस्त्रे विनियुक्ता। अस्येव च शस्त्रस्य याज्यैषा। हे 'अध्वर्यवः!' 'भरत' प्रापयतेमं 'सोमम्' एतस्माद्धविर्धानादुत्तरवेदिम्, 'इन्द्राय' इन्द्रार्थम्। अथवा 'भरत' धारयताग्नेरुपरि। ततश्चैनम् 'अमत्रेभिः' अमत्रैः पात्रैः, एभिः सोमचमसैः, वषट्कारे प्राप्ते 'आसिञ्चत' तस्मिन्नग्नौ। 'मद्यं' मदनीयम्, एतत्सोमाख्यम् 'अन्धः'। कस्मात् पुनरेवं ब्रवीमि?? इतः—यस्मात् 'कामी हि वीरः' कामयत वीरः इन्द्रः 'अस्य' सोमस्य 'सदं' सदैव, नित्यकालमेव 'पीतिं' पानमित्यर्थः। तस्मात् कारणात् 'जुहोत' तस्मै 'वृष्णे' वर्षित्रे इन्द्राय, एतं सोमम्। किमेतमेव केवलं सोममेव कामयते? नेत्युच्यते,—तदिदेष वष्टि' तत्तत्सोमप्रदानमेव इन्द्रो वष्टि कामयत इत्यर्थः, केवलं रात्रिपर्य्यायेष्वित्यर्थः। तस्मादासिञ्चत इमं सोमं

ता हि सह सर्पन्ति 'अरुषीः' अरोचनाः, दीता इत्यर्थः। या लक्षणाः अर्चिषः, ताः, अग्निः 'वावशानः' कामयमानो वाव मानो वा, शब्दं कुर्वाणः सः 'विद्वान्' आत्मीयमधि जानानः, 'मध्वः' घृतस्य हविषः पूर्णः, 'उज्जभार' ऊर्ध्वं हृत लोकानां 'दृशे कं' दर्शनायेत्यर्थः। एवं ता ऊर्ध्वं हृत्वा दर्श मिश्र्यज्ञयित्वा जनानाम् 'अन्तः' आदित्यस्य मध्ये यदन्त तत्र, 'येमे' तत्रोपनियमितवान् तद्वविः 'पुराजाः' अग्निः, स सर्वदेवेभ्यः प्रथम एव जातः। 'इच्छन्' 'वव्रिं' रूपं 'पूषण' पूष्णः, आदित्यस्य। कथं नामासावादित्यो दीप्तरूपः स्या अतोऽन्तरादित्यस्य येमे। तत्रासावेतमर्थम् 'अविदत्' ल इत्यर्थः। स एव दीप्तरूप आदित्यः संवृत्त इत्यभिप्राः एवमत्र "स्वसृर्वावशानः"—इत्यनेन सामानाधिकरण्याच्छ रूप्याच्च "वावशाने"—इत्यस्य कान्त्यर्थत्वं शब्दार्थत्वञ्च पद्यते ॥

"वार्यम् (५)"—इति। अनवगतम्। वृणोतेर्यद्वरणि मयति, तत्रार्यमित्युच्यते। अथापि। कदाचिद् वार्यश यजमानं श्रेयसं किञ्चिद्वपति, तदुच्यते। तद्वार्यं वृणी 'वरिष्ठं' गोपयत्यम्। मित्रो यत् पान्ति वरुणो यदर्यमा।" इति (ऋ० सं० ६, २, २३, ३)। विश्वमनस इत्यार्ष मैत्रावरुणे सूक्ते। 'तद्वार्यं वृणीमहे' वरयितव्यं वरणार्ह वृणीमहे। हे स्तोतारः! 'वरिष्ठं' 'गोपयत्यं' "गोपायितव्य यज्ञमर्थमित्यर्थः। अथवा गोपयत्यं गोपितारो यस्य

